निधान, जिनप्रवचनानुज्ञादानमिव निरस्तसमस्तविग्रहसमुद्देशप्रक्रियाविराजमानम्—अत्रैव भरत-क्षेत्रे अवन्तिविषयश्रीधाम पुर सुदर्शन नाम । यत्र च, कोपमानोद्दीपना द्विजातिवर्णनासु न शिष्याऽऽकर्णनासु, सदम्भोयोगोपक्रमः सिच्यमानप्रमदवनेषु न मुनिजनेषु, बहुलो-भप्रकाशातिशयो निशावतारेषु न साधुव्यवहारेषु, सततसमुल्लसद् वेषादिविरचना शृङ्गारोदये न पराभ्युदये, परोक्षदोपवादो विषयवैराग्यविचारे न परकथाप्रचारे, निरवद्यविद्याधरीकरणम् उत्तुङ्ग-

१. पु० पक्षे विग्रहः–रथचक्रादिकृतयुद्धादीनि तानि समस्तानि निरस्तानि, अत एव समुद्देशाः—सम् समीचीना, उद् उन्नतिं प्राप्ताः देशा अंशाः नगरविभागाः तेषा प्रक्रियया विराजमानम् । जिनप्रवचनपक्षे विग्रहः–विस्तारः जिनप्रवचने हि स्थाने स्थाने 'यावत्'पदेन विस्तारः निरस्त., तथा जिनप्रवचन विशिष्टविधिना समुद्दिश्यते इत्येवम् आगमवाचनाप्रदानविधिप्रक्रियया विराजमानम् । "विग्रहो युधि विस्तारे" (हैमअनेका० का० ३, श्लो० ८१३) ।

२ [ समुद्देशाः–जनपदा. । प्रक्रियया–रसादिरूपया । ]

३ द्विजातिवर्णनासु कोपस्य मानस्य च उद्दीपना । द्विजाः विप्र-क्षत्रिय-वैश्याः तेषाम् अतिवर्णनाम् ।

४. शिष्यश्रवणेषु न कोपस्य च उद्दीपना ।

५. सद् विद्यमानम् अम्भः–जलम्, तस्य योगोपक्रमः सिच्यमानेषु प्रमदवनेषु । दम्भेन सहितः सदम्भ स चासौ योगश्च तस्य उपक्रम न मुनिजनेषु, मुनयः निर्दम्भयोगाः–सरलमनोवचन-कायक्रियाः ।

६. बहुलः भप्रकाश–नक्षत्रप्रकाशः तस्य अतिशयः निशावतारेषु । बहुलोभप्रकाशाति-शयो न साधुव्यवहारेषु–साधुवणिजो न बहुलोभिनः । 'साधु'शब्देन वणिजा 'शाह' इति पदवी ज्ञेया । [ भानि नक्षत्राणि । ]

७ शृङ्गारोदये सततसमुल्लसता वेषाणा वस्त्रपरिधानरूपाणाम् आदिशब्दाद् भूषण तिलकाना च विरचना । पराभ्युदये सततसमुल्लासानाम् उत्कटाना द्वेषाणाम् अप्रीतिरूपाणाम्–आदिशब्दाद् ईर्ष्यादिदुर्वृत्तीना ग्रहणम्–न विरचना । अत्र 'समुल्लस'शब्दः 'अच्'प्रत्ययान्तः 'समुल्लसत्' इत्यनेन समानार्थः ।

८. [ परोक्ष० प्रकृष्टोऽक्षीणाम्[1] । ]

पर अक्षदोषवाद.–परः उत्कृष्टः अक्षम् इन्द्रिय तस्य दूषणवादः विषयवैराग्यविचारे । परकथासु न परोक्षदोषवादः–अन्येषाम् अन्यसम्बन्धिनीषु वार्तासु पृष्ठमासादनवत् पिशुनवद् वा–न परोक्ष यथा स्यात् तथा दोषाणा वदनम् केषाचिद् दोषकथा न ।

९. प्राकारे निरवद्याना–निर्दोषाणा विद्याधरीणा–विद्याधरीप्रतिकृतीनाम् अर्थाद् विद्या-धरीपुत्तलिकाना करणम् । प्राकारे हि विविधप्रतिकृतिविधानरूपस्य विविधमूर्तिविधानरूपस्य वा शिल्पस्य करणं प्रसिद्धम्, विद्याया अधरीकरणरूपे अवमाननारूपे ज्ञानतिरस्कारे नैष शब्दः–विद्याऽधरीकरणशब्दः–प्रयुज्यते ।

[ अधरीकरणम् अवज्ञाविधानम् । ]

---

1 'निरस्तसमस्तविग्रह' इति पाठ ख आदर्शे पतितः । 2 शिक्षाक° डेल । 3 °काशो नि° डे । 4 °तमुल्ल° खल । १. 'अक्षि' शब्दस्य षष्ठीबहुवचने 'अक्ष्णाम्' इति रूप सभवति, न तु 'अक्षीणाम्' इति ।

प्राकारे न ज्ञानतिरस्कारे, सुप्रभावनयप्रगल्भता महामन्त्रिमन्त्रसर्गे[1] न सेवकवर्गे, वृषलोप-[1]करणकलाङ्गहारचतुरता नटेषु न भटेषु, सगुणसकर्णसुवृत्तसुपात्रजडयोजना[2] कूपेषु न भूपेषु, उल्लासितविष-म-करघटना[3] सरोवरेषु न पौरनरेषु, सदरघट्टरवो[4] दीर्घिकासु श्रूयते पदे पदे न जनपदे ।

विनतानन्दनाशनोपयुक्तभुजङ्गभोगा[5] भोगवतीत्यध.कृत्येव[2] तदुपरि वर्तमानैरलङ्कृतैर्द्विधा-[6]

१ [ क्षत्रियधर्मस्य लोपकरणकलाया अङ्गहारचतुरता पतितस्य नश्यतो वा शीर्षाद्यङ्गच्छेदन-कौशल न । वृषलाः-दासा , उपकरणानि-नाट्यकरणानि, कलाङ्गहार०-गीत-नृत्यादीनाम् । ]

वृषलोपकरणकलया शूद्रोपकरणकल्या ये अङ्गहाराः अङ्गनिक्षेपाः तेषु चतुरता नटेषु । अङ्गाना हरणं स्थानात् स्थानान्तरनयनम्-विविधप्रकारेण अङ्गाना निक्षेपण तद् नटेषु । नटा हि अङ्गनिक्षेपकुशला इति प्रसिद्धम् । वृषस्य धर्मस्य लोपकरण तद्रूपया कलया अङ्गहारः रिपुजनस्य अङ्गस्य हारः-हरणम्, विनाशो वा । ये सुभटाः युधिष्ठिरादिवद् धर्मयुद्धपरायणाः ते धर्मलोपपूर्वकं रिपूणाम् अङ्गम् अङ्गानि वा न हरन्ति इति प्रतीतम् ।

२. यादृशी सगुणता, सकर्णता, सुवृत्तता, सुपात्रता, जडयोजना च कूपेषु तादृशी सगुणता, सकर्णता, सुवृत्तता, सुपात्रता, जडयोजना च न भूपेषु । कूपेषु सगुणता रज्जुसहितता, भूपेषु सगुणता सौजन्यादिगुणसहितता, कू० सकर्णता बद्धकण्ठसहितता, भू० सकर्णता पाण्डित्यं चातुर्य वा । कू० सुवृत्तता वर्तुलाकारता, भू० सुवृत्तता सुचारित्रता । कू० सुपातृ वा सुपात्रं शोभनरीत्या जलपायकव्यवस्था अथवा शोभनपात्रसहिता जलयोजनासहितता, भू० सुपातृता राज्य-जनपद-जनताना सुरक्षकता । कू० जडयोजना जलयोजना, भू० अजडयोजना अजडाना विशिष्टे विनियोगे योजनम् । सुपातृ+अजड०-सुपात्रजड० इत्यपि विभागः ।

३ सरोवरेषु उल्लासित तरङ्गायमाणं विष-जलम्, मकराश्च तेषा घटना । पौरजनेषु उल्लासिता वृद्धिं प्राप्ताः विषमाः कराः-कठोराः राजदेया. भागा. न तेषा घटना ।

४ सन्तः विद्यमानाः चलन्तः कूपाद् जलानयनसाधनरूपा 'रहेंट' इति नाम्ना प्रसिद्धाः ये अरघट्टाः तेषा रवः-ध्वनिः तत्र तत्र दीर्घिकासु-वापीषु पदे पदे श्रूयते । जनपदे न सदरघट्ट-रवः-सदरः-सभयः, घट्टे 'घाट' इति नाम्ना लोकप्रसिद्धे जलतीर्थे रव -शब्दः न श्रूयते । नद्या सरोवरस्य वा उपकण्ठ न कोऽपि सभय रौति-शब्द करोति ।

५. [ विनताना-प्रणतानाम् आनन्दनाशनाय-हर्षप्रणाशाय उपयुक्त सोपयोगो भुजङ्गाना विप्लुताना भोगो विलासो यस्या सा एव सदोषा भोगवती नागपुरी रतिहेतोरध·कृत्य अधो विधाय अवमन्यत तदुपरि वर्तमानैः हर्म्यैः । ]

विनतानन्दन -गरुड·, तस्य अशनम् तत्र उपयुक्ता भुजङ्गभोगाः-सर्पदेहाः, अतः भोगवती नगरी अधःकृता । पक्षे विनताः-विनम्राः तेषाम् आनन्दः तस्य नाशनाय उपयुक्ता भुजङ्गाना गणिका-पतीनाम् भोगा.-विलासाः, अतोऽपि भोगवती अध·कृता । अथवा विनताः वक्रा· जना तेषाम् आनन्दन यद् अशनम् तदर्थम् उपयुक्ता भुजङ्गाना भोगा विलासाः । अतोऽपि भोगवती अधःकृता । "विनत प्रणते भुग्ने"-(हेम० अनेका० का० ३, श्लो० ३२०) भुग्न हि अनृजु-वक्रम् ।

६. अलङ्कृतैः-अलङ्करणै -सुशोभनै· । अल कृतैः अलङ्करणै -अलङ्करणाना न प्रयोजनम् इत्येव 'द्विधा'पदेन भावद्वय प्रतिभासते ।

1 °मन्त्रिस° डे । 2 °कृतेत्येव डे ।

ऽपि सता गणेन सुधार्मिकालङ्कारैः रामणीयकगुणैरपुराऽपि पुरी जेतव्येति कोटिपताकापदेश-विरचितपत्रावलम्बनैरभिमतैर्द्विधाऽपि संपद्यमानगुणसमृद्ध्या, सतमसमृद्धिं नयन्तीमुच्चेतुमिव विभावरीं संगृहीतानेकलक्षदीपकोटिभिर्विभूषितैर्द्विधाऽपि सदा रामाभराभरणेन सर्वस्वापहारकं स्खलयितुमिवादित्यमण्डलमभ्रङ्कषामुन्नतिं दधानैराक्रान्ते ।

द्विधापि सदा-नभोगमनसामर्थ्यविभवेन श्रीधरेणापि न वै-कुण्ठेन, महेश्वरेणापि न

१ पुरा–पुरातनी, अपुरा–अपुरातनी नवीना इत्यर्थः, अर्थात् भोगवती नगरी अधः–कृता इति अन्या नवीना नगरी जेतव्या इति आशयः । अत्र 'अपुराऽपि' पदस्थाने 'अपराऽपि' अन्याऽपि इति पाठः समीचीनः ।

२. जय-पराजयवादकथाया पत्रस्य अवलम्बन युक्तम्, "चतुरङ्गो वादः पत्रावलम्बनमपि अपेक्षते", तल्लक्षणम् एवम्–"प्रसिद्धावयवं वाक्यं स्वेष्टस्यार्थस्य साधकम् । साधु गूढपदप्राय पत्रमाहुरनाकुलम्" ॥ (–प्रमेयक० पत्रविचारे पृ० ६८४)। अत्रापि 'नगरी जेतव्या' इति हेतोः पूर्वोक्तस्य पत्रस्य अवलम्बनम् उचितम् । पताकामिषेण विरचितानां पत्राणाम् अवलम्बनं कल्पितम् । पक्षे पत्ररूपा एव पताकाः ।

३. [ अभिमतैः इष्टैः गृहैः । ]

४. [ सपदि–समृद्धौ । ]

सपदि–लक्ष्म्याम् अमानगुणसमृद्ध्या अपरिमितगुणसमृद्ध्या अथवा सपद्यमानगुणसमृद्ध्या संपद्यमान प्राप्यमाणम् । 'समृद्ध्या पुरी जेतव्या' इति अन्वयः ।

५. [ सन्त शिष्टम्, असमृद्धिम् असपदम् । ]

सतम. घनान्धकारः तस्य समृद्धिं नयन्ती विभावरीम् । विभावरी हि अन्धकारसमूहं नयति इति प्रतीतम् । 'तम'शब्दः अकारान्तोऽपि ।

६. सुशोभितैः अथवा विभि पक्षिभि पक्षिरूपयुक्तैः भूषितैः । दीपा हि मयूराकाराः, अथवा अन्यपक्षिरूपाकाराः पित्तलधातुमयाः दृश्यन्ते ।

७. सदा नित्य रामाः–रमण्य तासाम् भरः समूहः तस्य आभरणेन ।

८. सर्वेषा स्वाप निद्रा हरति इति सर्वस्वापहारकम्, आदित्यमण्डलम् इति अन्वयः ।

९. दीपाः हि शोभार्थम् अतिशयेन ऊर्ध्वमेव स्थाप्यन्ते इति अभ्रकषाम् उन्नतिं दधानैः दीपकोटिभिः विभूषितैः इति सुसगतम् ।

१०. सदा सतत, नभोगाः नभोगामिनः विद्याधराः, अथवा सिद्धगगनगामिविद्याः, तेषा मनसा चित्तानाम् अर्घ्यविभवेन प्रार्थनीयविभवेन । सदान-भोग-मनसाम्–दानेन भोगेन च सहित मनः येषा तेषा सदानभोगमनसाम्, अथवा तादृशमनोभिः प्रार्थनीयविभवेन । अथवा सदानभोगमनसामर्थ्य-विभवेन सदा गगनगमनशक्तिशालिना, इद श्रीधरविशेषणम्, श्रीधरो विष्णुः तथा लक्ष्मीधरो धनी च ।

११. 'न वै कुण्ठेन' इत्यपि विभागो बोध्यः–वै निश्चितम् न कुण्ठेन किन्तु वैकुण्ठेन । वैकुण्ठः–विष्णुः ।

---

1 सुधर्माल° खल । 2 °रा पुरी डे, °राऽपि पुरी ल । 3 ससता° खल । 4 °माभिरा° डे ।

भीमेन, कलहंसकमलैकवसतिनापि न कलहं समाश्रितेन, धनदेनापि न कुबेरेण, समस्तवर्णा-भिरामेणापि विशदैकवर्णेन पौरजनेन शोभमानैरनेकशतसहस्रसंख्यै रम्यहर्म्यैरनिमिषीकृतसकल-दिगन्तागतजनसमूहम् ।

प्रियदेव-गुरूपास्तिनिष्ठैः शिष्टैरिवाकूटसुघटबहुमानैः कलिकालविलसितैरिव बहुधाऽसद्-धान्याधारैर्जननी हृदयैरिव बहुविधस्नेहैर्पूरितैर्वैयाकरणच्छात्रैरिव क्रियमाणविचित्रसूत्रविचारैः, सुरेन्द्ररूपैरिव प्रभूतनेत्राम्बरश्रियं धारयद्भिः, सरोवरैरिव घनसारसहितैः, केसरिकिशोरैरिव मृगमदामोदहारिभिः, प्रमदवनैरिव सुजातरूपनागरङ्गैरापणगणैरानन्द्यमानानेकक्रयिक-विक्र-यिकसंघातम् ।

१. यत्र कमलानि सन्ति तत्र कलहंसा अपि स्युः । अत्र तु सत्सु अपि कमलेषु न कलहं प्रति समाश्रितता, कलहो हि क्लेशः न तस्य अत्र समाश्रयः ।

२. धनद धनदाता श्रेष्ठी, न स कुबेरसंज्ञया विख्यातः अथवा न तस्य शरीरं कुत्सितम्—कुबेरो हि कुष्ठी इति प्रसिद्धिः ।

३. वर्णाः—क्षत्रिय-ब्राह्मण-वैश्य-शूद्राः तैः अभिरामेण, अपि तत्र विशदः वर्ण एक एव । विशदः शालीनः अधृष्ट इति ।

४ [ पुनः किंभूतं पुरम् ? अनिमिषीकृतो निमिषरहितो विहितः सकलः—समस्तः दिगन्ताद् देशान्तरादागतो जनसमूहो येन तत् पुरं तथा । कैः कृत्वा ? एवंविधरम्यहर्म्यैः । ]

५ अकूटं सत्यं वास्तविकम् । कूटम् असत्यम् ।

६. कलिकालपक्षे 'बहुधा असद्धान्य०' इति विभागो योज्यः ।

७. वैयाकरणाः—व्याकरणं पठन्तो हि छात्राः बहुधा विचित्राणि व्याकरणसूत्राणि विचार-यन्ति, पक्षे सूत्रं हि व्यवस्था ।

८. सुरेन्द्रो हि सहस्राक्षः प्रभूतनेत्र इति प्रसिद्धम् । अम्बरश्रीः—गगनश्रीः । पक्षे नेत्राणि परिधानविशेषरूपाणि पटोलाप्रमुखवस्त्रभेदरूपाणि—" नेत्रं नयनम् परिधानविशेषः " (हैमलिङ्गा० विव० पृ० १३१) अम्बराणि च सुरभिद्रव्यविशेषरूपाणि महर्घाणि भाषायाम् 'अम्बर'नाम्ना प्रसिद्धानि तेषां श्रीः । "अम्बरं वाससि व्योम्नि कर्पासे स्यात् सुगन्धके"—(हैमलिङ्गा० विव० पृ० १६१)

९. सरोवरे हि घनाः बहवः, सारसाः सारसपक्षिणः, तेषां हितरूपैः सरोवरैः पक्षे घनसारः कर्पूरः, तेन सहितैः ।

१० [ मृगमदः—कस्तूरिका तस्या मोदेन—परिमलेन ] हारिभिः सुन्दरैः प्रमदवनैः । [ मृगाणां—हरिणानाम्, मद—अहंकारम् तस्य आमोदं हरन्तीत्येवशीलास्तैः केसरिकिशोरैः ]

११ [ शोभनं जातरूपं सुवर्णम्, नागं सीसकम्, रङ्गं कश्मीरं येषु तैः । अन्यत्र सुजातरूपाः शोभनाकृतयः, नागरङ्गा नारङ्गफलानि येषु तैः आपणगणैः । ]

प्रमदवने सुजातरूपा—मनोहररूपसहिताः, नागा नागकुमाराः तेषां रङ्गः—नृत्यम् । आपण-पक्षे सु शोभनम्, जातरूपं सुवर्णम्, 'नाग'इति नागकेसरम्, 'रङ्ग'इति तन्नाम्ना प्रसिद्धो धातुविशेषः—भाषाया 'रांगा' इति—प्रसिद्धः । अथवा नागरङ्गा 'नारङ्ग'नाम्ना प्रसिद्धानि फलानि तानि च पक्वानि अत एव सुजातरूपाणि ।

1 °मेन कमलै° ख । 2 हंसम° डे । 3 हपूरैर्वै° ल । 4 °चित्रै [ ] सू° डे । 5 °रूपकैरिव डे । 6 °रानिन्द्य° डे ।

गृहदीर्घिकाभिरिव [1]सुतरङ्गसगताभिः, [3]सुशोभनवपुष्कराभि. [4]सदालिमालाऽलङ्कृताभिः [5]हारलताभिरिव [6]निजधवलाऽऽभाऽवभासितहृदयाभिर्[7]नाभिमानकलिताभिर्मुक्ताफलाडम्बराभि- [8]र्निजदृष्टिभिरिव सदाचरणलीनाभिरुच्चै[9]रञ्जनाभिरामाभि. [10]सुलज्जमानाभिः शुभगुरुदेशना-

१ 'गृहदीर्घिकाभि इव' इत्यादिना 'सदर्थालङ्कारसाराभि' इत्यन्तेन पदसमूहेन उपमान–उपमेयभावेन कुलवालिकास्वरूपवर्णन प्रतीयते । 'कुलवालिका'पदेन कुलस्त्री अवगन्तव्या "कुलस्त्री कुलवालिका" (–अभि० चिं० का० ३, श्लो० १७९) ।

२ सुतरङ्गसगता शोभनै तरङ्गैः सगता गृहदीर्घिका, सुताना–पुत्राणा, रङ्गेण- नृत्येन सगताः कुलवालिका –कुलस्त्रीक्रोडेपु यत्र सुता नृत्यन्ति इति भाव. ।

३. सुशोभानि नवानि पुष्कराणि जलानि अम्बुजानि वा दीर्घिकासु । "पुष्कर... ..खे जले अम्बुजे" (–हैम–अनेका० का० ३, श्लो० ६१४, ६१५) । वपुः कुर्वन्ति इति वपुष्कराः कुलवालिका हि सुशोभन वपुः कुर्वन्ति इति सुशोभनवपुष्कराः ।

४ दीर्घिकापक्षे पुष्कराणि हि सदा अलिमालाभि अलङ्कृतानि भवन्ति । कुलवालिकापक्षे ताभिः कण्ठनिहिता' पुष्करमालाः सुगन्धमयत्वेन सदा अलिमालाभि अलंकृता भवन्ति अथवा सदा आलिमालाः सखीसमूहः तेन कुलस्त्रियो हि सदा अलंकृताः भवन्ति । अथवा सत्यश्च ताः आलिमालाश्च सदालिमाला' अलिमाला सत्य' सज्जनरूपा ताभिश्च अलकृता इति ।

५. 'हारलता०' इत्यनेन कुलवालिकावर्णनम् । यथा हारलता निजधवलिम्ना आभारूपेण गुणेन हृदय अवभासयति तथा कुलस्त्री निजस्य धवस्य पत्युः लाभेन स्वीय हृदयम् अवभासयति अथवा निजया धवलया आभया हृदयम् अवभासयति ।

६ [ उज्ज्वलाभ्रत हृदय यकाभिस्ताभि । ]

७. [ अभिमान०–अहकारेण । ]

सा हारलता नाभिमाना नाभिपर्यन्ता नाभिमानकलिता, मान परिमाणम् । तथा मुक्ताफलानाम् आडम्बरेण सहिता कुलस्त्री, अभिमानेन न कलिता–अभिमानरहिता–नम्रा विनयवती तथा मुक्ता-फलस्य–घनसारस्य–कर्पूरस्य आडम्बरेण सहिता, शरीरे सुगन्धनिमित्त कर्पूरचूर्णलेपेन इद विशेषण युक्तियुक्तम् । "मुक्ताफल घनसारे मौक्तिके" (–हैम–अनेका० का० ४, श्लो० ३०८) ।

८ [ सद्०–सताम् । ]

यथा कुलस्त्रीणा निजदृष्टिः, सदा नित्यम् , चरणलीना पादाग्रलीना गमनावसरे कुलस्त्रीदृष्टि. इतस्ततो न भ्रमति तथैव कुलस्त्री सदाचरणेपु शुभाचरणेपु लीना, 'सदा चरण' तथा 'सदाऽऽचरण' इति विभाग ।

९. [ महता रञ्जनेन । ]

उच्चै –उच्चैस्तरेण उत्तमेन अञ्जनेन अभिरामा उच्चैरञ्जनाभिरामा। अञ्जनाभिरामा हि दृष्टि-र्भवति अञ्जनेन अभिरामा–अञ्जनमनोहरा, अथवा उच्चैः उत्तमेन रञ्जनेन रागेण अभिरामा शरीरे उत्तमरागमनी । दृष्टिपक्षे अञ्जनम् । कुलस्त्रीपक्षे अञ्जन रञ्जनं वा ।

१०. दृष्टिर्हि लज्जमाना मनोहरा । कुलस्त्रीपक्षे लज्जा हि मर्यादा । जैनप्रवचने सयमस्य अपर नाम 'लज्जा' इति प्रतीतम् । तत सुलज्जमाना संयमवती कुलस्त्री ।

भिरिव सत्यावतंसकल्पाभि., सद्मनो-मध्यवर्तिनीभि. सदर्थाऽलङ्कारसाराभिः सपद्यमानाभ्युदय कुलबालिकाभिः ।

नन्दनावलीभिरिव सुरचितमहाभोगाभि अद्भुतसुरतरूपशोभाभिः, पारिजात-मञ्जरीभिरिव सदामोदसम्पदालिङ्गिताभिः सुरसुन्दर्या न-खलूनाभि, चन्दनलताभिरिव

१. [ सतीषु मुकुट तत् । ]

यथा गुरुदेशनाया सत्यम् अवतसकल्पम् उन्नततमम् तथा कुलस्त्री० सत्येन उन्नततमा अथवा सत्या सतीस्त्रिया अर्थात् तदपेक्षया स्वशीलेन उन्नततमा ।

२. [ सद्०-सताम् । ]

सद्मनः आवासस्य मध्ये वर्तमाना कुलस्त्री न क्वापि विना प्रयोजनं वम्भ्रमीति, अथवा सद्मन प्रशस्त मन' तस्य मध्ये कुलस्त्री वर्तते—प्रशस्तमनोयुक्ता कुलस्त्री इति भाव ।

३. [ सदर्थः शोभनमूल्योऽलङ्कारो विभूषण यासा ताभिः । अन्यत्र सन् शोभनः, अर्थः अभिधेयः, अलकार उपमादिर्यासु ताभिः । ]

४. 'नन्दनावलीभिः' इत्यादितः 'प्रत्युज्जीवितहर०' इत्यादिपदपर्यन्तं पणरमणीवर्णनम् । पणरमणी पण्याङ्गना वेश्या ।

[ नन्दनावलीभिरिव वेश्याभिः । ]

५. [ सुष्ठु रचित. सूत्रितो महाभोगो विलेपनादिर्यकाभि' । अन्यत्र सुरैर्देवैश्चितो व्याप्तो महान् आभोगो विस्तारो यासु ताभिः । ]

नन्दनावलीपक्षे सुरैः चिताः महाभोगा महाविस्तारा यासु ताः । प्रणरमणीपक्षे सु सुष्ठु, रचिता महाभोगाः विशिष्टरूपाणि विलेपन-शृङ्गार-विभूषणपरिधानप्रभृतीनि याभिः ताः ।

६. [ अत्यद्भुत सुरत संभोगरूप शोभा च यासु ताभि । अन्यत्र सुरतरूणा कल्पवृक्षाणाम् उपशोभा यासु ताभि' । ]

न०पक्षे अद्भुताः सुरतरव कल्पवृक्षाः तेषाम् उपशोभाभिः उपशोभमानाभि । पण०पक्षे अद्भुत सुरत रूपं च तयोः शोभाभि' शोभमानाभिः । पारिजातमञ्जर्यो हि सुरतरौ भवन्ति ।

७ [ सदा सर्वदा, आमोद आनन्दः, सपत् लक्ष्मीश्च यस्य, अर्थात् भुजङ्गस्य तेन आलिङ्गिता' । अन्यत्र सत्या शोभनया आमोदसपदाऽऽलिङ्गिताभिः । ]

पारिजातमञ्जरी हि सदा सततम् आमोदसंपदा सुगन्धसंपदा आमोदसपदा आलिङ्गिता, अथवा सन् शोभनश्चासौ आमोदश्च सदामोदः तस्य सपदा आलिङ्गिता । पण०पक्षे पणरमणी आमोदसपदा सुगन्ध-सपदा हर्षसपदा वा आलिङ्गिता । "आमोदः गन्ध-हर्षयोः" (–हैम–अनेका० का० ३, श्लो० ३५३) ।

८. सुरसुन्दर्या अपेक्षया न खलु ऊनाभि', अर्थात् सुरसुन्दरीसमानाभिः तथा लूननखाभिः यासा नखा लूनाः सन्ति ताभिः । वर्धमानाना नखाना छेदन विशिष्टसौन्दर्यसूचनम् । 'न खलु ऊनाभिः' तथा 'नखलूनाभि.' इति पदविभागः । अत्र दन्तजातादिवत् समासः ।

1 सत्यव° ख । 2 °ङ्काराभिः खल । 3 °नावनीभि° ल । 4 °भिरनङ्गसु° हे ।

विचित्रभुजङ्गसङ्गताभिः[1] साधुतापहारकद्रवाभिः[2] निजवदनश्रीभिरिव मध्यस्थितरसज्ञाभिः[3], सुरञ्जितद्विजराजिभिः[4] निजदन्तपङ्क्तिभिरिव सदशनवदनश्रीकाभिः[5], पराभूतकलिकोपमारहिताभिः[6],

१ [ भुजङ्गा वेश्यापतयः । अन्यत्र सर्पाः । ]

चन्दनलतापक्षे चन्दनलताया हि भुजङ्गा सलग्ना विद्यन्ते इति लोकप्रवाद । पण० पक्षे भुजङ्गा हि गणिकापतयः तैः सगताः ।

२ [ एकत्र साधुताया मनुष्यत्वस्य शिष्टताया वा अपहारको भ्रंशको द्रवो हास्य यासा ताभि. । अन्यत्र साधु यथा भवति तथा तापहारकः सतापोच्छेदको द्रवो रसो यासा ताभिः । ]

चन्द० पक्षे चन्दनलतायाः द्रव चन्दनरसः साधु यथा स्यात् तथा तापस्य हारक. औष्ण्य-शमनाय लोके चन्दनद्रवः उपयुज्यते इति विश्रुतम् । पण० पक्षे पणरमण्याः द्रवः केलिः क्रीडा लीला वा साधुता सदाचरणशीलताम् अपहरति इति साधुताऽपहारकः । "केलिः द्रव. परीहासः क्रीडा लीला च नर्म च"–(अभि० चिं० का० ३, श्लो० २१९) ।

३. [ अग्रे मध्यस्थिताना लक्षणयाऽऽत्मासक्ताना रस राग जानन्तीति ताभिः। अन्यत्र मध्यस्थिता वर्तते अन्तर्लीना रसज्ञा जिह्वा यासा ताभि । ]

निजवदने रसज्ञा जिह्वा मध्यस्थिता वर्तते अत एव वदनश्रीः शोभते । पण० पक्षे रसज्ञाः पुरुषाः तासा गृहमध्ये स्थिताः विद्यन्ते एव ।

४. [ सुष्ठु रञ्जिताः अनुरक्तीकृता द्विजराजिर्ब्राह्मणश्रेणिकाभि । अन्यत्र रक्तीकृता दन्तश्रेणिर्यासु ताभिः । ]

निजवदने द्विजराजय दन्तावलयः सुरञ्जिताः विद्यन्ते । पण० पक्षे द्विजराजय विप्र-क्षत्रिय-वैश्यसमूहाः सुरञ्जिता अथवा दन्तश्रेणयः शोभनेन रागेण अथवा सुवर्णरेखया रक्ताः विद्यन्ते ।

५. [ भोजनस्य वस्त्रस्य श्री. शोभा यासा ताभिः । ]

निजदन्तपङ्क्तौ वदने मुखे सत् शोभनम् अशनम् अन्नम् ओदनो वा तस्य श्री शोभा विद्यते ।

पण० पक्षे सद् अशनम् अन्नम् वा शोभन. स्वाद । "भक्तम् अन्नम् कूरम्...ओदनः अशनम्"–(अभि० चिं० का० ३, श्लो० ५९), "स्वदन स्वादनम् अशनम्"–(अभि० चिं० का० ३, श्लो० ८७) तथा वदनम् मुखम्, पणरमण्यो हि विशेषेण वदनश्रियं धारयन्ति, अथवा वदनम् वचनम्, तस्य श्रीः–शोभा विद्यते । पणरमण्यो हि विशेषतः मधुरवचना भवन्ति ।

६. द्विजराजयः क्षत्रियराजय. । "द्विजः विप्र-क्षत्रिययोर्वैश्ये दन्ते"–(हैम अनेका० का० २, श्लो० ७१) । क्षत्रिया हि पराभवरहिता· कलिकोपरहिता वारणरहिताश्च विद्यन्ते 'मा'पद वारणवाचकम्, "मा लक्ष्म्यां वारणे"–(हैम अनेका० का० २, श्लो० ११) । पण० पक्षे पराय उत्कृष्टाय, अभूताय असत्याय तथा कलये क्लेशाय कोपाय माराय वा हिता पणरमण्य. इति प्रतीतम् । अत्र 'पर'शब्दः 'अभूत'शब्दश्च कलि-कोपयोरपि विशेषणं नानुचितम् ।

---

1 °वसन° ल । 2 °भि प्रेततमा° डे ।

त्रियामाभिरिव राजकैरवभासमानाभिस्तारैताराल‍ङ्कारसाराभिः, सकलकलाभिरपि मृदुमधुर-भाषिणीभिः, अङ्गरागचङ्गाभिरप्यनङ्गरागचङ्गाभिः, प्रत्युज्जीवितहरनयनदहनेन्धनीभूतरति-रमणाभिः पणरमणीभिरपहस्त्यमानासमानधनतरुणजनधर्मकर्मोत्कण्ठम् ।

विध्वस्तसमस्तदोषान्धकारैरनङ्गीकृतदुर्वारमारैर्भवानीहावरुद्धचित्तविकारैर्गिरीशाकारैरनगारै-

१. [ राजकैः—नृपसमूहैः । ]

'त्रियामाभिः' इत्यनेनापि पणरमणीवर्णनम् । राजकैरव हि चन्द्रविकासि कमलम्, तैः त्रियामाः रात्रयः अवभासमाना भवन्ति । पण० पक्षे पणरमण्यो हि राजकैः राजपुत्रसमूहैः अवभासमाना भवन्ति । राजकं राजपुत्रसमूहः, "राजपुत्रकं राजन्यकं राजकम्"-(अभि० चि० का० ६, श्लो० ५३)

२. [ तारा उडव । ]

तारा निर्मला तारा तारकरूपा नक्षत्रादयः ता एव अलङ्कारसारा यासु ताभिः त्रियामाभिः । पण० पक्षे ताराः निर्मलाः तारकवत् शोभनरूपाः प्रकाशवन्तः अलंकारसारा श्रेष्ठाभूषणानि यासां ताभिः पणरमणीभिः । पणरमण्यो हि विविधानि आभूषणानि चाकचिक्ययुक्तानि हीरक-रत्न मणि-सुवर्णमयानि धारयन्ति इति प्रसिद्धम् ।

३. या मृदु मधुरं च भाषन्ते ताः कलकलः कोलाहलः तेन सहिता कथम् ? इति विरोधः, "कोलाहलः कलकलः"-(अभि० चि० का० ६, श्लो० ४०) । सकलाः कला यासु ताः सकलकलाः ताभिः इति विरोधपरिहारः । पणरमण्यो हि सकलकलानिपुणा इति वात्स्यायनकामसूत्रकारः ।

४. [ अङ्गराग० विलेपनेन । ]

पणरमण्यो हि अङ्गरागेण चङ्गा विद्यन्ते ।

५. याश्च अङ्गरागेण चङ्गाः ताः कथम् अनङ्गरागचङ्गा० अनङ्गम् अङ्गाभावः तस्य रागेण चङ्गा ? इति विरोधः । विरोधपरिहाराय अनङ्गः कामदेवः । पणरमण्यो हि सदा कामदेवरागेण चङ्गाः इति विश्रुतम् ।

६ [ प्रत्युज्जीवितः पुनर्जीवितः, हरनयनदहने-महेश्वरलोचनवैश्वानरे इन्धनीभूतो रतिरमणः कामो यकाभ्यः ताभिः । ]

यद्यपि हरनयनेन रतिरमणः कामदेवः दग्धः, तथापि पणरमणीभिः स दग्धोऽपि रतिरमणः प्रत्युज्जीवितः जीवनयुक्तः कृत इति भावः ।

७. ये असमानधनाः असाधारणलक्ष्मीपतयः तरुणजनाः तेषां धर्मकर्मणः उत्कण्ठा पणरम-णीभिः अपहस्त्यमानाः यस्मिन् नगरे तत् । पणरमणीसहवासेन धर्मकर्मणः उत्कण्ठा अपहस्तिता तिरस्कृता भवति, अथवा धर्मकर्मणः धनुष्कर्मणः वीरतासूचकस्य धनुष्कर्मणः धनुःसंचालनरूपा तदु-त्कण्ठारूपा वा प्रवृत्तिः पणरमणीसहचारेण कुण्ठा भवति इत्यपि भावो बोध्यः ।

८. विध्वस्त० इत्यादिना अनगारवर्णनम् ।

[ अनगारैर्मुनिभिः समुल्लासितस्वर्गापवर्गमार्गं पुरम्, किंविशिष्टैः ? गिरीशाकारैर्महेश्वर-सदृशैः । अग्रे विध्वस्तं समस्तं दोषा एव अन्धकारं यैः । अन्यत्र विधुना शीर्षस्थितचन्द्रसात्कृत्वा अस्तं विक्षिप्तं दोषाया रजन्या अन्धकारं यैः । आदौ अनङ्गीकृतो निरङ्गो विहितो दग्धो दुर्वारो मारो यैः । ]

1 °भिरनङ्ग° डे । 2 धर्मोत्क° ख ।

येत्रोढाया वृषे-ऽपापे सदाश-सकला-ऽलसा ।
नुर्धीः स्त्रीणां पुनश्चैत्ये सदा रासकलालसा ॥ ६३ ॥

अस्मन्मुखमकलङ्कं निरीक्ष्य मा पीपतन्मृगं चन्द्रः ।
इति करुणयेव विदधति नीरङ्गीं यत्र कुलवध्वः ॥ ६४ ॥

चटकानवेक्ष्य विशतो यत्र प्रासादशिखरहरिवदने ।
त्यजतीन्दुमृगोऽरिभय न चेन्दुशङ्का मुखेः स्त्रीणाम् ॥ ६५ ॥

हि अनुकूल उदयो येषा ते तथा । यत्र पुरे रामाः स्त्रियो न नैव रहितोदयाः तावतोच्छ्रयाः । क ? सन्महे सोत्सवे भवने गृहे तथा प्रभायाः कान्तेर्विनयस्य च मन्दिरम् आवासाः । तथानेक-शोभया प्रभूतरम्यत्वेन येव लक्ष्मीरिव 'या'शब्दोऽत्र लक्ष्मीवाचकः ।] ('सन्मह इभवने' 'जरा मारहितोदयाः' 'न रामा रहितोदयाः' इत्येव पदविभागं कृत्वा टिप्पणीयोजना बोध्या) ।

यत्र पुरे सन्महे सदुत्सवे तथा भवने गृहे रामाः प्रभाविनयमन्दिरम् प्रभा च विनयश्च प्रभा-विनयौ तयोः मन्दिरम्, अथवा प्रभावि च नवमन्दिरं च प्रभाविनयमन्दिरम् । अनेकशोभया अनेकप्रकारया शोभया अथवा अनेकशः अभया निर्भयाः रामाः स्त्रियः न रहितोदया. किन्तु उदय-सहिताः । अनेकशोभया—अनेकशः अभयाः—इत्यपि विभागः ।

१. [ यत्र पुरे नु पुरुषस्य, धीः बुद्धिः, ऊढाया परिणीतभार्याया, सदारा सकलत्रा, वृषे धर्मे, सकला सहिता । पापे कल्मषे, अलसा अकरणशीला, स्त्रीणां पुनः धीः बुद्धिः, चैत्ये जिनभवने, सदा नित्यम्, रासकलालसा हल्लीसकलम्पटा ।]

यत्र नगरे नु पुरुषस्य धीः बुद्धिः ऊढाया परिणीताया भार्यायाम् । अपापे निष्पापे च वृषे धर्मे अर्थात् धर्मस्थाने सदा रासकला रासक्रीडाकलालसा उल्लासयुक्ता, अथवा पापे अलसा धीः । स्त्रीणां पुनः धीः चैत्ये रासके रासककरणे लालसा पुनः पुनः अभिलाषयुक्ता । रासके नर्तकीनां वृन्दं तालेन लयेन च समन्वितं प्रयुज्यते । तथाहि—

"अनेकनर्तकीयोग्यं चित्रताललयाऽन्वितम् ।
आचतुःषष्टियुगलाद् रासकं मसृणोद्धतम् ॥"—(काव्यानुशासनम्, अ० ८, सू० ४,)

२. नीरङ्गी मुखाच्छादनसाधनवस्त्ररूपम् उपकरणम् स्त्रियः सज्जनो वहिर्निर्गमे उपयुञ्जते । अकलङ्कं स्वमुखं मृगपातकारणं न स्यात् इति हेतोः यत्रत्याः कुलवध्वः स्वकीयं मुखं समाच्छा-दयन्ति इति आशयः ।

३. प्रासादशिखरहरिवदने जिनमन्दिरशिखररचितसिंहवदने अथवा राजमहालयशिखरस्थित-सिंहवदने, "प्रासादो देव-भूपानाम्"—(अभि० चिं० का० ४, श्लो० ५९.) । चटकान् 'चकलो' इति नाम्ना गूर्जरभाषाया प्रसिद्धान् पक्षिविशेषान् । न चेन्दु० यद्यपि इन्दुमृगः अरिभयं त्यजति परन्तु स्त्रीणां मुखैः इन्दुशङ्का न त्यजति ।

1 नुर्धीः टे ।

धनतमरुचिरमणीकः कल्याणमयः सनन्दनच्छायः ।
यत्र वसतां सतां मेरुरेव सादृश्यमाश्रयति ॥ ६६ ॥
कुङ्कुममृगमदमिश्रैः स्नानजलैरविरलैर्बहिर्भूतैः ।
रागद्वेषमलैरिव यद् जिनगलहस्तितैर्भाति ॥ ६७ ॥

यत्र च,

अपि तृण पितृण स्वर्ऋण[1] न चानिधनतो धनतो वसता सताम् ।
स्वदयितोदयितोद्धतचेतसा[2] सुनयता नयता परमोन्नतिम् ॥ ६८ ॥

१. अत्र एतत्पुरनिवासि-मेरुपर्वतयोः सादृश्य वर्णित ग्रन्थकारेण—तद्यथा—यत्र पुरे धनतमरुचयः प्रभूततराभिलाषा, अथवा प्रभूततरप्रभा रमण्यो भार्या यस्य सः । कल्याणमयः—श्रेयोमयः, नन्दनस्य पुत्रस्य छायया शोभया सह वर्तते स तथा । मेरुप० धनतमाः अतिप्रभूताः रुचिराः । मनोहराः, मण्यः—चन्द्रकान्तादयो यत्र स तथा । कल्याणमयः सुवर्णमयः । नन्दनाख्यवनस्य छायया वर्तते स तथा ।

मेरुः घनतमरुचिर-मणीकः नगरवास्तव्योऽपि घनतमरुचि-रमणीकः बहुतमकान्तिसुन्दरीसहित । मेरुः कल्याणमयः सुवर्णमयः, नगरवास्तव्योऽपि कल्याणकर्ममयः मङ्गलमयः । मेरुः सनन्दनच्छायः नन्दनवनच्छायासहितः, नगरवास्तव्योऽपि पुत्रच्छाया पुत्रकान्ति तया सहितः, "नन्दनः—पुत्रः" इति प्रसिद्धम् ।

२. यत् इति नगर जिनगृहाद् गलहस्तितैः वहिःक्षिप्तैः अत एव वहिर्भूतैः कुङ्कुममिश्रैः मृगमदमिश्रैश्च कस्तूरिकामिश्रै अविरलैः स्नानजलैः भाति—शोभते अर्थात् नगरस्य वहिःपरिसरे क्षितानि कुङ्कुमयुक्तानि कस्तूरिकायुक्तानि च जिनस्नानजलानि दृश्यन्ते । अत्र 'स्नानजलै' उपमेयम् 'रागद्वेषमलैः' उपमानम्, वहिःक्षिप्तैः रागद्वेपमलैरिव एतद् नगरं तैः स्नानजलैः भाति इति तात्पर्यम् । अनेन एतन्नगरनिवासिषु जनेषु रागद्वेषयोः स्वल्पताऽपि अभिव्यज्यते ।

३. [ किंभूताना सताम् ? सुदयितया शोभनभार्यया उदयितं उदय गत चेतो येषा तेषाम् । स्वनयता निजनीतिता, परमोन्नतिं प्रकृष्टोत्कर्षं, नयता प्रापयताम् । ]

पितुः ऋणम्, पितृऋणम्, पितृणम्, एवम् स्वऋणम् अपि, तृणम् तृणसमान न, अर्थात् तेषा तृणसमानमपि ऋण नास्ति ।

पितृ+ऋणम् पितृणम् "ऋतो वा तौ च" (१।२।४) इति सूत्रेण सन्धौ सिद्धम् । स्वऋणम् इति तु "ऋलति ह्रस्वो वा" (१।२।२) इत्यनेन 'स्व'पदसंबन्धिनः अकारस्य ह्रस्वत्वे विहिते असन्धिः । अतः स्वर्णम् इति यदा न जातं तदा स्वऋणम् इत्यपि सिद्धम् ।

अनिधनतः अविनाशतः यावत् स्वस्य विनाशो नास्ति तावत्—यावज्जीव तेषा ऋण नास्ति धनतो वसता तेषाम् इत्येव नीतिः परमप्रकर्षं प्राप्ता । तथा स्वदयिता—स्वदयालुता, तस्या उदयिता—उदयप्राप्तता, तया उद्धतम् उन्नत चेत येषा तेषाम्, 'उत्'पूर्वः गत्यर्थकः 'हन्'धातुः अत्र बोध्यः, उद्धतम् उद्गतम् उन्नतम् । सुनयता सुनीतिताम्, परमोन्नतिं परमप्रकर्षम्, नयता प्रापयताम्, प्रकृष्टनीतिपरायणानाम् । अथ 'सुदयिता'पाठे समीचीनदयालुता० अथवा सुदयिताभिर्वा शोभनाभार्याभिः उन्नत चित्त येषा तेषाम्—ऋणाभावाय सुभार्याभिः प्रेरणा लभमानानाम् इति भावः

1 'ण तथानि डे । 2 सुदयितोद' ल, स्वदयतोद' डे । 3 'ता स्वनयता नयता प' डे ।

निरस्तदर्पकोपमानसन्तानतया समुल्लासितस्वर्गापवर्गमार्गम् । अपि च,

इष्टकान्तोन्नतश्रीकाः सर्वदा-रूपशोभिताः ।
सदा-रम्भान्विता यत्र रम्यहर्म्यसमा नराः ॥५८॥
यत्रारामोपमा रामा भान्ति सद्रूपशोभिताः ।
सदाचारकृतच्छाया. सदा-ना-रङ्गसङ्गता. ॥५९॥

अनगार-गिरीशयोः उपमानोपमेयभावोऽत्र वर्णितः, अनगारा उपमेया, गिरीशो हि उपमानम् । गिरीशो हि महादेवः–हर–शङ्कर अत्र वोध्यः । चन्द्रमौलिर्हि गिरीशः स्वमस्तकस्थित-चन्द्रप्रभया दोषाया रात्र्याः अन्धकार विध्वस्त कृतवान् तथा अनगारा जैनमुनयोऽपि समस्तान् दोषान् स्वीयसयमसाधनया विध्वस्तान् कृतवन्त । यथा हि गिरीशेन दुर्वारो मारः कामदेवः अनङ्गीकृत अङ्गरहित कृत' । तथैव अनगारैः अपि दुर्वारमार अनङ्गीकृतः न अङ्गीकृत. न स्वीकृतः अर्थात् पराजित एव । "मारः अनङ्गे"–(हैम अनेका० का० २, श्लो० ४५८) ।

९. [ भवे ससारे अनीहया अनिच्छया, अवरुद्धो निषिद्धश्चित्तविकारो यैस्तैः । भवान्या गौर्या हावै कृत्वा रुद्धो व्याप्तश्चित्ते विकारो यैः । कया कृत्वा ? निरस्ता निर्णाशिता दर्पकोपयोरहकार-क्रोधयोर्या मानसतानता प्रमाणपरपरता तया । अन्यत्र निरस्ता विक्षिप्ता दर्पस्य कामस्य या उपमान-सतानता तया ईश्वरेण कामस्य दग्धत्वात् । ]

यथा गिरीश भवान्याः हावे हावभावे सत्यपि स्वचित्तविकार रुद्धवान् एवमेव अनगारा अपि भवस्य ससारस्य अनीहा अवाञ्छा तया स्वकीयं चित्तविकार अवरुद्धवन्तः ।

१. अनगारै दर्पस्य कोपस्य मानस्य च संतानः–विस्तारः निरस्त, ततश्च एतद् नगरं समुल्लासितस्वर्गमार्गम् तथा समुल्लासिताऽपवर्गमार्ग सजातम् इति आशयः ।

२. 'इष्टकान्त०' इत्यादिना नगरस्थनराणा वर्णनम्, तच्च उपमानरूपहर्म्यवर्णनेन विहितं ग्रन्थकारेण, यत्र नरा हर्म्याणि च साम्य धारयन्ति, तथाहि–हर्म्याणि इष्टकान्तेन उन्नतशोभा-युक्तानि, इष्टका हि भाषायाम् 'इंट'नाम्ना प्रसिद्धा, इष्टकानाम् अन्तेन अन्तिमभागेन हर्म्याणा शोभा उन्नता दृश्यते, इष्टकाभिरेव हर्म्याणि उन्नतानि जायन्ते । हर्म्यपक्षे इष्टका+अन्त० इति पद-विभागः । हर्म्यं हि धनिना गृहम् । "हर्म्यं तु धनिना गृहम्"–(अभि० चि० का० ४, श्लो० ५९) । "हरति मनः इति हर्म्यम्" इति हेमचन्द्रः–(अभिधानचिन्तामणिवृत्तौ) नरा इष्टा कान्ता उन्नता श्री येषा ते इष्टकान्तोन्नतश्रीका. ।

३ हर्म्यपक्षे सर्वाणि सर्वप्रकाराणि दारूणि काष्ठानि तै. उपशोभितानि हर्म्याणि । नरपक्षे ते सर्वदा रूपशोभिताः इति स्पष्टम् । हर्म्यपक्षे सर्वदारु+उप० इत्यादिकं पद समस्तम् । नरपक्षे सर्वदा रूपशो० इत्यादि पदद्वयम् ।

४. ह० पक्षे सदा सततम्, रम्भाभि रम्भासमानाभिः अङ्गनाभि अन्विता इति सबन्धो ज्ञेयः अथवा रम्या हि कदल्य –हर्म्याणामङ्गणे कदल्यो विद्यन्ते । अत्र 'सदा रम्भा०' इत्येव पदविभागः । नरपक्षे सदारम्भा सत्प्रवृत्तय ताभिः अन्विताः । अत्र 'सदारम्भा०' इति एक समस्त पदम् ।

५. 'यत्रारामोपमा०' इत्यादिना उपमानरूप'आराम'तुलनया नगरस्थनारीणा वर्णनम् । तथाहि–यत्र नगरे रामा. आरामोपमा, आरामा' उद्यानानि । आरामपक्षे स+द्रु+उपशोभित० द्रुभिः सहिना, उपशोभिताश्च । रामापक्षे सद्+रूप+शोभित० स्वरूपेण शोभिता । आ० पक्षे

धारयत्यधमर्णाभं यत् समुद्रमणीगणम् ।
प्राकारः प्रतिभू रुद्धोऽन्यथा किं परिखाऽब्धिना ॥ ६० ॥
यत्र दत्ते नैवा यूनां नामोद काननश्रिया ।
तिरस्कारं तु वृद्धस्य राज्ञोऽपि सुपयोधरा ॥ ६१ ॥
सन्मेहे-भवने[1] यत्र प्रभाविनयमन्दिरम् ।
अनेकशोभया-येव न-रामा-रहितोदयाः ॥ ६२ ॥

सदा+अचार+कृत+छाया सदा अचारेण अकम्पनेन छाया कृतवन्तः सदाचारकृतच्छायाः । रा० पक्षे सदा आचारेण आचाररक्षणेन अथवा सता विद्यमानेन अथवा सता शोभनेन आचारेण कृता छाया कान्तिर्यासा ताः सदाचारकृतच्छायाः । आ०पक्षे सदा नारङ्गसगताः नारङ्गः तन्नाम्ना फलम् तेन संगता आरामाः । रा०पक्षे सदाना रङ्गसगताः । दानसहिताः दानशीलाः, रङ्गसगताः नृत्यसगताश्च ।

१. [ धारयति–देयं करोति । अधमर्णाभम्–अग्राहकसदृशम् । यत् पुरम् । समुद्रमणीगण समुद्रस्य रत्नसमूहम् । प्राकारः शालः । प्रतिभूः प्रभुरिव । रुद्धः नियन्त्रितः परिखाव्याजात् । ]

इदं नगर परिखाब्धिना सर्वतः वेष्टितम् रुद्धमिव आभाति । अस्य नगरस्य पार्श्वे परिखाब्धिः कथं समायातः ? इति प्रश्ने उत्थिते ग्रन्थकार एव समाधत्ते–यतः अनेन नगरेण समुद्रमणीगणः समुद्रस्यरत्नसमूहः समुद्रपार्श्वात् नियतकालार्थं नगरशोभानिमित्त गृहीतः स समुद्रस्य प्रति अर्पणीय एव यथाविधि, अस्याः प्रतिज्ञायाः पालनार्थं नगरस्य प्राकारः प्रतिभूर्जातः–'जामीन' इति भाषाया प्रतिभूशब्दपर्यायः–संप्राप्तेऽपि अवधौ समुद्रमणीगणः न प्रत्यर्प्यते नगरेण अतः परिखाब्धिना प्रतिभूरूपः प्राकारः रुद्ध. इति भावः । नगरस्य सर्वतः जलभृता परिखा वर्तते । नगरे च रमणीगणः समुत् प्रमोदसहितः, अतः इत्येववर्णनम् ।

२. [ यत्र नगरे । आमोदं परिमलम् । आननश्रिया मुखलक्ष्म्या । तिरस्कारम् अवज्ञाम् । वृद्धस्य चन्द्रस्य । सुपयोधरा नवा तरुणी; सजलभूः । ]

'नवा सुपयोधरा' नवा नूतना, सुपयोधरा सुस्तनी, तरुणी काननश्रिया स्वसज्जितगृहलक्ष्म्या यूनां युवकजनानाम् आमोद हर्षम्, न दत्ते ? अपि तु दत्ते एव इति काकुशैल्या प्रश्नः । सा एव तरुणी वृद्धस्य राज्ञोऽपि नृपस्यापि तिरस्कार दत्ते–सा नवा तरुणी राज्ञोऽपि अधीनतां न भजति अपि तु तादृशस्य वृद्धस्य कामुकस्य राज्ञोऽपि तिरस्कारमेव दत्ते, इत्येव पुरतरुणीना शीलस्य उज्ज्वलता वर्णिता । अथवा सुपयोधरा सुजला भूमिः काननश्रिया वनलक्ष्म्या वायूना पवनानाम् आमोदं परिमल न दत्ते इति न, अपि तु दत्त एव–वनलक्ष्म्या आमोद परिमल प्राप्ता वायवः सर्वं सुरभि कुर्वन्ति इति भावः । अनेन भूमेरपि वनलक्ष्म्या अपि उत्कर्षः ख्यापितः । 'नवायूनाम्' इत्यस्य युवकपक्षे 'नवा यूनाम्' इति विभागः । वायुपक्षे न वायूनाम् इति विभागः । "कानन तु ब्रह्मास्ये विपिने गृहे"–(हैम अनेका० का० ३, श्लो० ३९४) तथा "आमोदो गन्ध-हर्षयोः" –(हैम अनेका० का० ३, श्लो० ३५३) ।

३. [ सन्मेहे तानि विद्यमानमहागजानि वनानि आरामाणि यत्र पुरे प्रभाविणो नयस्य नीतेर्मन्दिरम् आवासो नरा' पुरुषाः अनेकशोऽनेकप्रकारम् अभयायेव निर्भयायेव । मारस्य कामस्य

1 सम्महे॰ डे ।

प्रतिदिनजिनस्नानाम्भोभिः शुचौ मणिकुट्टिमे
निशि निशि निशानाथो यस्मिन्नसौ प्रतिबिम्बितः ।
परिभवपद नीतः पौराङ्गनावदनश्रिया
हृदि कलुषित. पातालान्तर्विशन्निव लक्ष्यते ॥ ६९ ॥

तत्र नैयसमयवासनासारविचारपुरस्कृतविचित्रमन्त्रिमन्त्रसर्ग', सैत्याभिनयविनयमयव्यापारवशीकाराभिमुखीकृतसमस्तपूज्यवर्ग' सततमविश्रमपूर्वजक्रमसमारूढप्रौढराज्यसमुद्धरणधीरः, निरुपक्रमपराक्रमसमाक्रान्तविक्रान्तसाहङ्कारदुर्वारवीरः, समुन्नतेनापि भूभृच्चक्रवालेनास्खलितरथो राजा मणिरथो नाम ।

यः प्रबलतरवारिधारानिपातभीषणोऽपि महीभृतामुपरि परितो घनलीलया समुन्नतोऽपि

१. प्रतिदिनजिनस्नानाम्भोभिः मणिकुट्टिमे शुचौ निर्मले कृते, तत्र निशानाथः निशि प्रतिबिम्बितः दृश्यते । अत एव ग्रन्थकारः अनेन श्लोकेन तन्नगरस्थितवनितावदनविभूषया परिभवं प्राप्तो निशानाथः अस्तमनसमये पाताल विशन्निव इति उत्प्रेक्षते ।

२. नयसमयः नीतिशास्त्रम् । वासना सस्कारः भावना वा ।

३. सत्याभिनय इति सत्यव्यञ्जक' ईदृशः विनयमयो व्यापारः, अत्र विनयो हि सत्यव्यञ्जकः मनोभावसत्यतासूचकः, न तु दम्भप्रधानः गतानुगतिको वा ।

४. 'अविश्रम'पद विश्रान्तिरहितपुरुपार्थसूचकम्, पूर्वजैः अविश्रान्त समुद्योगेन राज्यं प्राप्तम् । 'क्रम'पद पूर्वजाना परम्परायाः सूचकम् ।

५. निरुपक्रमः–विघ्नाभावः । 'सोपक्रमम् आयुः' 'निरुपक्रमम् आयुः' इत्यत्र वाक्ये उपक्रमपद यमर्थं सूचयति स एवार्थः अत्रापि बोध्यः ।

६. विक्रान्तः वीरः शूरपुरुप. ।

७. यदा भूभृच्चक्रवालम् भूभृत्समूह. पर्वतवृन्दं समुन्नत स्यात् तदा न कोऽपि रथः अस्खलितो गन्तुमर्हति, अय तु राजा समुन्नतेन अपि भूभृच्चक्रवालेन अस्खलितरथः कथम्? इति विरोधः 'भूभृत्'शब्द. अत्र 'नृप'अर्थसूचकोऽपि बोध्यः, तेनैव च विरोधपरिहारः ।

८. घन' मेघः स्वलीलया प्रबलतरवारिधारया प्रपततो वारिणः जलस्य प्रबलतरया धारया यथा राजमण्डल चन्द्रमण्डल तिरस्करोति न मित्रमण्डलम् सूर्यमण्डलम् तथैव अयं राजा प्रबलस्य तरवारेः अने' धारया राजमण्डलम् माण्डलिकानाम् नृपाणाम् सामान्ताना वा मण्डलं तिरश्चकार, न मित्रमण्डलम् स्नेहिमनुजमण्डलं मित्रमण्डल वा इति । यथा घन. भूभृता पर्वतानामुपरि स्वलीला दर्शयति तथा अयं राजा भूभृता माण्डलिकराजाना वा सामन्तराजाना वा उपरि प्रबलतरवारिवर्षणलीला करोति, एवम् अस्य नृपस्य 'मेघ'पदप्रकाशिनेन अर्थेन सह समानता प्रदर्शिता, शब्दद्दष्ट्या शब्दच्छलेन ।

1 °न्द्रराज्य' डे । 2 'धीरनिरुपमक्रम' डे । 3 °रितो प° ल ।

तिरश्चकार केवलं राजमण्डलं न पुनर्मित्रमण्डलम् । यं च विनतानन्दनसमुल्लासिताच्युत-लक्ष्मीकमहितापकारकबलं पश्यन्तोऽपि भुजङ्गतां पृथ्वीं दधानममन्यन्त कृतिनः, येन

१. [ यं च मणिरथं कृतिनः पण्डिताः, विनतानन्दनं गरुडम् अत एवोल्लासितः—उत्क्षिप्तः, अच्युतः नारायणः, लक्ष्मीः श्रीश्च येन तम् । अहीनां सर्पाणां, तारकाः कवलाः यस्य, सर्पकवलनाद् गरुडस्य । तम् एवभूतमपि, पृथ्वीं पृथुलां, भुजङ्गतां सर्पतां दधानं—धारयन्तं, कृतिनः पण्डिताः, अमन्यन्त जानन्ति स्म । यो गरुडः स सर्पतां कथं दधातीति विरोधः । अथ च विनतानाम् आनन्दनं तोषकम् । उल्लासिता वर्धिता, अच्युता अभ्रष्टा, लक्ष्मीः समृद्धिः येन तम्, अहितानां वैरिणाम् अपकारकं बलं सैन्यं यस्य तम् । पश्यन्तोऽवलोकयन्तो भुजं गतां प्राप्तां सतीं पृथ्वीं दधानं धारयन्तं सन्तं कृतिनो मन्यन्ते । ]

अस्मिन् गद्यरूपे मणिरथनृपवर्णने ग्रन्थकारः 'यः, यम्, येन, यस्मै, यतः, यस्य, यत्र' इत्येवं सर्वं विभक्त्यन्तम् एकवचनान्तं 'यत्' शब्दं प्रयुक्तवान् ।

यं नृपम् अच्युतलक्ष्मीकम् अहितापकारकबलं पश्यन्तोऽपि कृतिनः भुजङ्गतां पृथ्वीं दधानम् अमन्यन्त इति कथम् ? अर्थात् यः महितापकारकवलः—पृथ्वीतापकारकबलः स कथं पृथ्वीं दधाति ? इत्येव विरोधः । अस्य परिहारस्तु अच्युतलक्ष्मीकम् अहितापकारकबलम् इत्येवं पदविभागेन सुगमः । अहितानां—शत्रूणाम् अपकारकं बलं यस्य अर्थात् शत्रुविनाशकारी स राजा पृथ्वीं भुजं हस्तं प्रति गतां दधात्येव । अन्योऽपि विरोधः एवम्—विनतानन्दनः गरुडः, तेन समुल्लासितौ अच्युतः लक्ष्मीश्च यत्र तत् विनतानन्दनसमुल्लासिताच्युतलक्ष्मीकम्, तथा अहितापकारकबलम्—अहेः सर्पस्य तापकारकं बलं यस्य, एवं सति यः सर्पतापकारिबलधारकः स कथं पृथ्वीं भुजङ्गतां दधानः स्यात् गरुड-सर्पयोः सहानवस्थानात् ? अत्रापि 'भुजं गताम्'—हस्तं गताम् इत्येवं पदविभागे सहज एव परिहारः । तथा विनतानां—प्रणतानाम्, आनन्दनेन समुल्लासिता अच्युता—च्युतिरहिता स्थिरा लक्ष्मी राज्यकोशरूपा अथवा तेजोरूपा यस्य तम् इत्येवं भावनायामपि विरोधपरिहारः, तथा यः एवंविधलक्ष्मीवान् तस्य पृथ्वी हस्तगता एव भवेत् इति कृतिनां दर्शनं निर्दोषं सुसङ्गतं च ।

२. [ अथ च येन राज्ञा अनलसमानेन न आलस्योपहताहङ्कारेण । ज्वालस्फीत्यादिरूपो यस्य तेन । अवनं रक्षणम्, तस्य समृद्धिहेतुः, महोदयः उच्छ्रयो यस्य तेन । सदा—नित्यम्, आहवं—संग्रामम्, पुष्णाति स तथा तेन एवं सता न हि मान्येव साहङ्कार एव विलयं क्षयं अनीयत । किन्तु सदम्भोऽपि—सकपटोऽपि । ]

अत्र विरोधः परिहारश्च एवम्—यः अनलसमानः अग्निसमानः, अवनसमृद्धिहेतुमहोदयः वनसमृद्धिहेतुमहोदयरहितश्च—वनसमृद्धिविनाशकारी स हिमानीं विलयं नयति इति तु प्रतीतम्, परन्तु तादृशः सदम्भः विद्यमानं वा प्रशस्तं जलं कथं विलयं नयेत् इति विरोधः । अनलसः मानः अभिमानः यस्य स अनलसमानः तीव्रमानतेजोयुक्तः, अवनसमृद्धिहेतुमहोदयः रक्षणरूपायाः प्रीतिरूपायाः वा समृद्धेः हेतुरूपः महोदययुक्तश्च, अथवा आवनसमृद्धिहेतुमहोदयः वनपर्यन्त-भूमिसमृद्धिहेतुमहोदयः, तेन न हि मान्येव विलयम् अनीयत—तेन यो मानी जनः अभिमानी जनः केवलं विलयं न अनीयत परन्तु यः सदम्भः—सकपटः शठ जनः सोऽपि विलयम् इति सुगमम् । विरोधे—न हिमानी एव । परिहारे न हि मानी एव । वि० सद् अम्भः प० स + दम्भः दम्भसहितः सकपटः । तथा सदाहवपुषा—वि० दाहसहितवपुषा, अनलसमानस्य विशेषणम् अनलस्य

चानलसमानेनावनसमृद्धिहेतुमहोदयेन सदाहवपुषा न हिमान्येव विलयमनीयत किन्तु सदम्भोऽपि । यस्मै च न परं गिरीशाय पुरस्कृतयुवतिजनमनोभवनायकाय मनोभवनायकाय सुरयोषितोऽपि स्पृहयालवः ।

यैतश्च न परं तुष्यतो रुष्यतोऽपि सदानगजदलैरेवावरणचेष्टाबहुधातुरङ्गैरेव शोभा दृष्टा महतामपि महीभृता, यैस्य च प्रतिभटमदोत्कटगिरितटविकटकरटकरटिघटाकुम्भस्थली-पर्यटनपरिश्रान्तकोशतटीकोणविश्रान्तकृपाणकान्तया प्रतिपदभग्नानेककण्टकयाऽप्यस्खलितया

दाहरूपत्वात् । प० सदा आहवपुषा आहवः–रणसंग्रामः, पुष्यति इति पुष्, आहवस्य रणसंग्रामस्य पुष् तेन आहवपुषा । अथवा आहवः यज्ञः तस्य पुषा आहवपुषा दानप्रियेण वा देवपूजापरायणेन वा इत्यपि अपरो भावः ।

१. [ यस्मै मणिरथाय, न परं केवलम्, गिरीशाय महेशाय, पुरस्कृतम् उत्साहित युवतिजनमन एव भवन गृहम्, येन स तथा तस्मै, कायेन शरीरेण, मनोभवः काम एव नायकः स्वामी तस्मै, एवंविधाय सुरयोषितोऽपि देवाङ्गना अपि स्पृहयालव । अथ च गिरीशाय विदुषे, पुरस्कृतम् उत्साहित युवतिजनस्य यन्मनस्तस्य भवनमिव तन्मनसो विश्रामहेतुत्वाद् नृपतेः कायेन मनोभवस्य नायक इव स्वामी तस्मै कामादपि सुरूपत्वात् तस्य । ]

यस्मै पुरस्कृतयुवतिजनमनोभवाय येन युवतिजने मनोभवः पुरस्कृतः आभिमुख्य नीतः तस्मै, तथा कायमनोभवनायकाय कायेन शरीरसौन्दर्येण यः मनोभवः अथवा कायधारी वा मनोभवः तस्य तस्मिन् वा नायकः तस्मै कायमनोभवनायकाय सुरयोषितः देवाङ्गनाः स्पृहयालवः पर न गिरीशाय हराय, वाक्पतये हिमालयाय वा । राजा मणिरथ ईदृशभोगविलाससमृद्धिमान् इति भावः ।

२. [ यतः यस्मात् । नगजदलैः नगजश्रदलैः । सैन्यैः । ]

तुष्यतस्तु जनान् शोभा दृश्यते एव पर यस्मात् नृपात् रुष्यतोऽपि महतामपि महीभृताम् अर्थात् यस्य रोषवशाद् महान्तोऽपि महीभृत राजान, सदलबला रणे समागच्छन्ति अतः तेषां शोभा दृष्टा । कैः [1] सदानाः समदाः गजा तेषां दलैः एव तथा, आवरणचेष्टबहुधातुरङ्गैरेव– ये आवरणचेष्टाः आवरणेन (चेष्टन्त इति चेष्टा) चेष्टा–चेष्टाकारिण. एतादृशा बहुधा बहुप्रकाराः ये तुरङ्गाः अश्वाः, तैरेव ।

३. प्रतिभटाना मदोत्कटाः गिरितटविकटकरटाश्च ये करटिनः, तेषां या घटा, तस्याः कुम्भस्थल्या उपरि यत् पर्यटनम् (परितः अटनम्), ततः परिश्रान्तया भूरिश्रमयुतया, यस्य कृपाणकान्तया तरवारिरूपवनितया, कोशतटीकोणे विश्रान्तया । अत्र करटः हस्तिगण्डस्थलम् । करटी च हस्ती । शत्रुगजघटागण्डस्थलभेदनेन परिश्रान्तया तरवारिरूपवनितया स्वकोशकोणे विश्रान्तिः कृता । राज्य निष्कण्टक कृत्वा तरवारिरूपवनिता विश्रान्ति कृतवती–इति भावः, तया कृपाणकान्तया गोमण्डलम् अरक्ष्यत इति अन्वयः ।

४. भग्नानेककण्टकयाऽपि अस्खलितरूपया, अन्या तु भग्नकण्टका–यस्याः पादे कण्टको भग्नः सा पुन. प्रवृत्तौ स्खलति, इय तु अस्खलितरूपा । कण्टकास्तु भूमौ विद्यन्ते ततः तेषां विनाशाय भूमौ एव पद स्थिरीक्रियमाण समुचितम् । शत्रवः कण्टका बोध्याः । तथापि अनया

1 कोशकुटी ल ।

तथापि प्रांशुवंशभूधरशिरःपरम्परासु स्थिरीकृतपदया दिवानिशमाज्ञागोपालिकया न केवलं सकलं गोमण्डलमरक्ष्यत वर्णाश्रमवत्समण्डलमपि । यत्र च राज्ञि सततमखण्डमण्डलमात्मानमाधाय निजकरनिकरनिरस्तप्रभा सदा नक्षत्रसभामिमां च वसुमतीमतीतविततदुर्नयतिमिरभरां सूत्रयति कलिता न वराकोक्त्याऽतिथयः पूर्णानन्दादयो रिक्ता अपि । अपि च,

कुर्वता पक्षविच्छेदं दर्पोद्धतमहीभृताम् ।
इन्द्रवज्रायितं येन वंशस्थेनापि धीमता ॥ ७० ॥

---

कृपाणकान्तया प्रांशुवंशभूधरशिरःपदपरम्परासु स्थिरीकृतपदया अर्थात् इयं कृपाणकान्ता प्रांशुवंशाः उन्नतकाष्ठमयवंशाः, तथा उन्नताः भूधराः पर्वताः तेषां शिरःपरम्परासु मस्तकपरम्परासु स्थिरीकृतपदा इति विरोधः । परिहारस्तु एवम्—प्रांशुवंशाः उन्नतजातिकुलवंशाः ये भूधराः राजानः, तेषां शिरःपरम्परासु स्थिरीकृतपदा अर्थात् अनेकोत्तमवंशाः राजानः अनेन नृपेण कृपाणकान्तया पराजिता इति आशयः । सा च कृपाणकान्ता राज्ञः आज्ञाङ्किता, यथा राज्ञः शासनं तथैव वर्तनशीला, सा एव गोपालिकारूपा तथा केवलं गोमण्डलं धेनुमण्डलं न अरक्ष्यत किन्तु वर्णाश्रमनिवासिनः ब्राह्मणादिवर्णस्थितान् आश्रमवासिनः ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासिरूपवत्सान् सर्वान् लोकान् अपि अरक्ष्यत । अत्र गोपालिका यथा धेनुमण्डलं वत्समण्डलं च अरक्ष्यत तथा इयं राज्ञः आज्ञागोपालिका, गोमण्डलं पृथ्वीमण्डलं तन्निवासिनां स्ववत्सरूपाणां प्रजानां मण्डलमपि अरक्ष्यत । इति आज्ञा-गोपालिकयोः साम्यम् ।

१. अत्र वाक्ये नृप-चन्द्रयोः साम्यं वर्ण्यते—यथा राशि चन्द्रे स्वीयं पूर्णमण्डलरूपम् आत्मानम् आधाय सदा नक्षत्रसभां निजकिरणनिकरेण निरस्तप्रभां सूत्रयति सति तथा वसुमतीम् विततः विस्तीर्णः, दुर्नयः दुर्नयकारणरूपः तिमिरभरः तेन अतीताम् रहिताम् सूत्रयति सति रिक्ता अपि तिथयः नवराकोक्त्या नवीनपूर्णिमानाम्ना, कलिता पूर्णा नन्दा जाता इति एवमेव राशि नृपे सततम् अखण्डलम् पृथ्वीमण्डलरूपम् आत्मानम् अथवा अखण्डस्य पृथ्वीमण्डलस्य मारूपम् लक्ष्मीरूपम्—आत्मानम् आधाय निजकरनिकरनिरस्तप्रभा—निजः यः करः बाहुः, तत्समूहेन सदानक्षत्रसभा—दानसहिताः ये क्षत्राः क्षत्रियाः, तेषां सभाम् निरस्तप्रभाम् सूत्रयति सति, तथा वसुमतीं विततदुर्नयरहितां (अत्र दुर्नयो दुष्टा नीतिः अथवा दुष्टो द्युतभेदः) सूत्रयति सति अतिथयः, रिक्ता अपि धनरहिता अपि, न वराकोक्त्या रङ्कोक्त्या कलिताः किन्तु पूर्णानन्दाः ।

२. यथा हि इन्द्रस्य वज्रो महीभृतां पर्वतानां पक्षविच्छेदं पार्श्वविच्छेदं करोति तथा अयं नृपो दर्पोद्धतानां महीभृतां रिपुनृपाणां पक्षविच्छेदं बलविच्छेदं करोति । पर्वतानां पक्षाः पार्श्वाणि । नृपाणां पक्षो बलम्, "पक्षस्तु मासार्धे ग्रह-साध्ययोः ॥ चुल्लीरन्ध्रे बधे पार्श्वे ।" (—हैम० अने० का० २, श्लो० ५७७, ५७८) अत्र इदमेव आश्चर्यं यद् अयं नृपः वंशस्थः सन् इन्द्रवज्रायते । यः वंशस्थः स तु वंशे वेणौ एव तिष्ठति स कथम् इन्द्रवज्रायितुं समर्थः ? अथवा यः वंशस्थरूपे छन्दसि अस्ति स कथम् इन्द्रवज्राछन्दवत् आचरितुं समर्थः ? अयं नृपः वंशस्थोऽपि इन्द्रवज्रायते इति 'अपि'शब्देन आश्चर्यं सूचयति ग्रन्थकारः । नृपपक्षे वंशः—अन्वयः उत्तमकुलरूपः तत्र स्थितेन अनेन इन्द्रवज्रायितम् इन्द्रवज्रवद् आचरितम् इति आश्चर्यशमनम् ।

---

1 °त्रप्रभा° डे ।

यस्यारिभिश्चिताऽऽश्लिष्टा सदाहा रोचितप्रभा ।
बन्धुभिस्तु वारारोहा सदाहारो-चितप्रभा ॥७१॥

कौमुदं प्रति यश्चन्द्रः सूर्यः पद्माकरं प्रति ।
सूर्याचन्द्रमसौ सन्तमसन्तं प्रति चाक्रमात् ॥७२॥

यथा शय्यंभवाचार्यास्तथा यस्य महाऽरयः ।
वीक्षमाणा मनाक्काष्ठा दश-वैकालिकं व्यधुः ॥७३॥

सदानवारणक्रीडा येन कृत्वा तत. कृताः ।
सदा नवा रणक्रीडा विपयोत्कर्षहर्षिणा ॥७४॥

---

१ यस्य अरिभिः सदाहा—दाहसहिता तथा रोचितप्रभा—रोचितज्वालाप्रभावती चिता आश्लिष्टा। बन्धुभिस्तु सदाहारा उचितप्रभा वरारोहा वनिता स्त्री आश्लिष्टा। सदाहारा कण्ठे सदा विद्यमानहारा तथा उचितप्रभा उचितलावण्ययुक्ता, अथवा सन् आहारो यस्या. सा सदाहारा प्रशस्तभोजनवती, "वरः आरोहः कटीभागः यस्याः सा वरारोहा स्त्री ("आरोह दैर्ध्ये उच्छ्राये स्त्रीकट्याम्" (—हैम० अने० का० ३, श्लो० ८०५)

२. यः नृपः कौ पृथ्व्या मुद प्रति आनन्द प्रति चन्द्ररूप, यथा चन्द्रः कौमुदं कुमुदाना समूह प्रति आनन्ददायी प्रसिद्ध, तथा यः नृप पद्माकर प्रति लक्ष्मीहस्तं प्रति सूर्य, यथा सूर्यः पद्माकरं पद्मवन प्रति विकासकारी प्रसिद्धः । अत्र य नृपः एक प्रति चन्द्रसमान एक प्रति सूर्यसमान. एवंक्रमेण दृश्यते तस्य न काऽपि विशेपता परन्तु अय नृप. सन्तम् असन्त च प्रति अक्रमात् क्रमरहित यौगपद्येन सूर्याचन्द्रमसौ सूर्यरूप चन्द्ररूपश्च एककाल दृश्यते इति अस्य नृपस्य विशेपता। सन्त सज्जनं प्रति । असन्तम् असज्जन प्रति । सज्जना हिं नृप यस्मिन् काले चन्द्रसमं शीतल सुधाकरं च अनुभवन्ति तस्मिन्नेव काले तं नृपम् असज्जनाः प्रचण्ड सूर्यसमम् तापकरम् अनुभवन्ति इति क्रमरहिततया यौगपद्येन अय नृपः सूर्याचन्द्रमसौपदेन उपमितः ।

३. यथा 'शय्यंभव'नामान आचार्या मनाक्काष्ठाः स्वीयमनकनाम्न' शिष्यस्य काष्ठाः प्रकर्षान् वीक्षमाणा' 'दशवैकालिक' नामक मूलरूपम् आगम विहितवन्त तथा यस्य महारयः महान्तः अरयः, दश काष्ठाः दश दिशो वीक्षमाणाः भयेन दिशः अवलोकमाना मनाक् स्वल्पं वैकालिक—विकालभोजन व्यधुः । महावीरात् प्रथमः सुधर्मा, तत द्वितीयः जम्बू., ततः तृतीयः प्रभवस्वामी, तत' चतुर्थः शय्यंभवस्वामी—एवं शय्यभवो नाम आचार्यः चतुर्थः । स स्वस्त्रियं गर्भिणीं त्यक्त्वा प्रव्रजितवान् । गर्भिणीं स्त्रियं दृष्ट्वा लोकेन पृष्टम्—'किं तव गर्भे ?' सा प्रत्युवाच—'मनाक्' अर्थात् किञ्चित् स्वल्पं पिण्डरूप मम उदरे विद्यते इति हेतोः जायमानस्य पुत्रस्य 'मनाक्' इति नाम्ना प्रसिद्धिर्जाता । अत एव ग्रन्थकृता 'मनाक्काष्ठा'पदेन शय्यभवाचार्यस्य मनाक्नाम्नः दारकस्य सूचना कृता। "काष्ठा तु प्रकर्षे स्थानमात्रके दिशि" (—हैम० अने० का० २, श्लो० १०५)

४. विपयोत्कर्षहर्षिणा देशोत्कर्षहर्षिणा—देशाना विजयेन जायमानः उत्कर्षः तेन हर्षिणा—हर्षता अथवा देशाना निर्विघ्नदेशाना जायमानः उत्कर्षः तेन हर्षिणा येन नृपेण, सदानैः—

अरिपुर प्रति यत्र कृतोद्यमे वलवता चरणेऽपतता पुरः ।
अनमता दधता च समानता वलवता च रणे पतता पुरः ॥ ७५ ॥
न वसुधाऽऽपि न भोजनसंपदो नवपुर वरतोऽपि सुरोचितम् ।
नवसुधाऽऽपि नभोजनसपदो नवपुर वरतोऽपि सुरोचितम् ॥ ७६ ॥ युग्मम् ।
अवतो विधित प्रजा निजा यशसेऽवर्द्धत यस्य मेदिनी ।
पयसे पृणत पयस्विनीमिव गोपस्य सदैव तर्णिका ॥ ७७ ॥

समदैः वरणैः सह क्रीडाः कृत्वा अर्थात् अश्व-गजयुद्धादीनां क्रीडाः पूर्वम् अभ्यासाय कृत्वा ततः पश्चाद् येन सदा नवाः नूतनाः रणक्रीडाः कृता इति भावः गम्यते ।

१. [आद्यवृत्तस्य पूर्वार्धेन द्वितीयपूर्वार्ध योज्यम् । उत्तरार्धेनोत्तरार्ध योज्यम् । यत्र मणिरथे अरिपुरं प्रति कृतोद्यमे सति च रणचङ्क्रमणे वलवता समर्थेन अत एव पुरो नगरीतः, पतता गच्छता-स्वनगरान्निर्यतेत्यर्थः । द्वितीयवृत्तपूर्वार्धेन एवविधेन रिपुणा न नैव । वसुधा पृथ्वी, आपि लेभे, न भोजनसपदः-'अर्थवशाद् वचनपरिणाम.' इति न्यायात्-आप्यन्ते आहारप्राप्तिर्नाऽऽपि-नाभूदित्यर्थः । अम्वरतोऽपि वस्त्रतोऽपि सुरोचित अत्यभिमतीकृतं न वपुः शरीरम् आपि । अथवा इत्थंव्याख्या-अकारविश्लेषाद् अवलवता-असमर्थेन अत एव चरणे पादे, पततः आनमत इत्यर्थः । एवंविधेन रिपुणा वसुधा न आपि, अपितु आपि लेभे । भोजनसपद आपिरे । 'अर्थवशाद् विभक्ति-परिणामः' इति वहुवचनम् । सुष्ठु रोचित नवपुर नूतननगरम् आपि, आस्ता निजैव भूमिः । एतानि कुतो वरतो मणिरथप्रसादात् । अधुनोत्तरार्धयोर्व्याख्या-अनमता प्रणाममकुर्वता, यत समानता साहकारता दधता धारयता अत एव वलवता च सैन्यसहितेन च, चशब्दोऽपिशब्दार्थ. । रणे सग्रामे पतता म्रियमाणेनेत्यर्थः । क्व ? पुरो मणिरथस्याग्रे । तेन रिपुणा नवा नूतना, सुधा अमृतम् आपि । नभसि जनाः नभोजनाः अर्थाद् देवास्तेषा सपद. समृद्धयः । आपिरे पूर्ववत् मृत्वा स्वर्ग गता इत्यर्थः । वरतोऽपि सुरोचितम्, श्रेष्ठादपि सुष्ठु रोचितम् इष्टम्, नवपुरं स्वर्गि-नगरम् इत्यर्थः । आपि लेभे इति वृत्तयुग्मार्थः ।]

यत्र यस्मिन् राज्ञि अरिपुर विजेतु कृतोद्यमे केनचिद् वलवता वलिष्ठेन पुर. चरणे अपतता अत एव अनमता, तथा वलवता चमूसहितेन केनचित समानता दधता रणे च पतता पराजयं प्राप्तेन न वसुधा आपि प्राप्ता, न भोजनसंपद् आपि प्राप्ता, भोजनसपद्+ओ=भोजनसंपदो । अत्र 'ओ' इति अव्ययम् सवोधनसूचकम् अत 'हे जनाः' इति अध्याहार्यम् । तथा वरतोऽपि वरदानतोऽपि सुरोचित सुकान्तियुक्तं वपुः न आपि । अत्र वपु+अ=वपुरम् । 'अ' इति अव्यय स्वीकारसूचक ज्ञायते 'हा' इत्यस्य प्रतिरूपकम 'अ' इति । परन्तु मरणान्तरम् नवसुधा नवीनम् अमृतम्, आपि प्राप्तम् । नभोजनसपदः नभोजनाना सपद स्वर्गीयसंपदः प्राप्ता नवपुर नवीन शरीर, वरतः स्वीकुर्वत सुरोचित देवोचितम् नवपुर नवीन शरीरम्, आपि प्राप्तम् । अर्थात् अनेन राज्ञा सह येऽन्ये नृपा युद्ध कृतवन्तस्ते पराजिताः मरण प्राप्ताः स्वर्ग प्राप्ताः इति ।

२. पयसे दुग्धाय, पृणतः पालयतः गोपस्य तर्णिका वत्सतरी यथा अवर्धत तथा अस्य राज्ञः यशसे-यशोऽर्थ, निजाः प्रजा, अवतः रक्षतः, मेदिनी पृथ्वी, अवर्धत-अस्य राज्य विशेषतः विस्तीर्णं ज्ञातमिति भावः ।

गृहीतदीपैरपि न प्रसारितेक्षणैरपि क्वापि यदर्थितेक्ष्यते ।
प्रसिद्धिमागादिदमेव दूषणं महीपतौ शासति यत्र मेदिनीम् ॥ ७८ ॥
धर्मगुणेषु कथामपि कर्तुं लभते न जातु वधकजनः ।
अस्खलितः पुनरितरः करुणैकधने नृपे यत्र ॥ ७९ ॥
न खलु मकरकेतुः सुप्रसन्नेऽपि शम्भौ
क्वचन समुपलेभे रूपरेखा यदीयाम् ।
दधति मुदममन्दामन्यथा स्मेरनेत्रा
मनसि युवतयः किं तं सकामा वहन्त्यः ? ॥ ८० ॥

तस्य च कनिष्ठेनापि गुणगरिष्ठेन वरवीरवारप्रष्ठेनापि स्थिरप्रतिष्ठेन, वराङ्गनारातिस्वामिसुहृद्बन्धुहृदयमध्यमधिवसताऽपि दलितैकसकलबहिरङ्गान्तरङ्गविपक्षकक्षेण

१. यस्मिन् नृपे मेदिनीं शासति यत् यस्मात् प्रसारितेक्षणैरपि गृहीतदीपैरपि अर्थिता याचकता न क्वापि ईक्ष्यते विलोक्यते, अतः अस्य राज्ञः नगरं 'याचकतारहितम्' इति दूषणं प्रसिद्धं जातम् ।

२. [धर्मगुणेषु धनुःप्रत्यञ्चा । अस्खलितः कर्तुं लेभे ।]

यस्मिन् करुणैकधने नृपे वधकजनः धर्मगुणेषु धनुषः गुणेषु, अथवा धनुषि, तद्गुणे च कथामपि कर्तुं न लभते परन्तु इतरो जनः अवधकजनः धर्मविषये तद्गुणविषये च अस्खलितः सन् कथां करोत्येव, अत्र वधकजनपक्षे धर्मशब्दः धनुषो वाचकः, गुणशब्दश्च धनुष्प्रत्यञ्चावाचकः तथा अवधकजनपक्षे धर्मशब्दः अहिंसा-सत्यादिधर्मस्य वाचकः, गुणशब्दश्च शौर्य-क्षमा-मार्दवादिगुणानां वाचकः । तथा च कोशः—

"धर्मो यमोपमापुण्यस्वभावाऽऽचारधन्वसु ।
सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि ॥ धर्मं दानादिके ।"
—(हैम अने० का० २, श्लो० ३३०, ३३१) तथा—
"गुणो ज्यासूदतन्तुषु । रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीम इन्द्रिये ॥
रूपादावप्रधाने च दोषान्यस्मिन् विशेषणे ॥—(हैम अने० का० २, श्लो० १३९—१४१)

३. शम्भुना दग्धः मकरकेतुः कामः शम्भौ सुप्रसन्ने जातेऽपि यदीया यन्नृपसत्का रूपरेखा क्वचन न लेभे ? यदि न लेभे तदा अन्यथा—कामस्य अनङ्गस्य अभावे—स्मेरनेत्रा विस्फारितनेत्रा युवतयः तं कामं वहन्त्यः सकामाः अमन्दां मुदं दधति इति किम् कथं स्यात् ? यदि कामो जीवितः स्यात् तदैव 'युवतयः सकामाः' एतत् संभवति । स च जीवितः कामः अयं नृप एव, अत एव तं युवतयः मनसि दधति—धारयन्ति तत एव च सकामाः, अत्र कामशब्दः स्मरवाचकः, इच्छावाचकः, काम्यवाचकश्च । "कामः स्मरेच्छा-काम्येषु" 'कामं वाढेऽनुमति-रेतसोः ॥' —(हैम अने० का० २, श्लो० ३२३, ३२९)

४. [प्रष्ठेनापि स्थिरप्रतिष्ठेन वेगवता अग्रगेण, स्थिरस्थितिना ।]

मन्थाचलेनेव श्रीमदामोदकरणेन न-दीनमथनेन प्रकटितराजकलेन सुप्रभावसुधोल्लासकेन संपादितसुरभीकेन, प्रकृतिसमुन्नतेन कुलीनतैकस्वभावेन समस्तकल्याणघटितमूर्तिना पादलग्न-राजहंसकरेण युगबाहुनामधेयेन सोदरेण युवराजेन निर्मथितनिखिलदुरवगाहचिन्ता-महार्णवस्य, विषयसुखरसिकस्यापि प्रताप परा वृद्धिमगमत् ।

एव च कदाचित् सर्वाङ्गलग्नैर्बहुनिमग्नैरमन्दमकरन्दामोदलीनद्विरेफपुञ्जे· कुसुम-कार्मुकसायकैरिव स्वयमवचितै स्वयमेव विरचितगुम्फै सुरभितमैरभिरामकुसुमभरैरलङ्क्रियमाणा-भिरन्त.पुरसुन्दरीभि शरणार्थमिवानुगम्यमानस्य, कनकाचलस्येव सदारामरोचितविचित्र-

१. अत्र 'वराङ्गना'प्रभृतिकाना 'वन्धु'शब्दपर्यन्ताना पदाना द्वन्द्वो वोध्य अतश्च वराङ्गनाया', अराते', स्वामिनः सुहृदः वन्धोश्च समानवयोमित्रस्य हृदयम् अधिवसता अधितिष्ठता इति भाव. । यथा मन्थाचल' श्रीमतः लक्ष्मीपते कृष्णस्य आमोदकरण तथा अयं श्रीमता धनवता जनानाम् आमोदकरण. तथा नदीनमथनः मन्थाचल (नदीनः समुद्र ) अयमपि दीनाना न मथन — न दु खोत्पादक ।

२. [ नृपते कला चातुर्य येन । ] येन राजकला राज्यकरणपटुता अथवा राजकला राजाग्र-रूपा प्रकटिता तेन ।

३. सुप्रभया वसुधाया उल्लासकेन । अथवा सुप्रभावेण सुधाया गङ्गाया उल्लासकेन-"सुधा गङ्गेष्टिका स्नुह्यो ' –(हैम अने० का० २, श्लो० २५९)

४. येन सुरभिः सपादिता, सुरभि काञ्चन धेनु वसन्तश्च, "सुरभिः हेम्नि चम्पके ॥ जातिफले मातृभेदे रम्ये चैत्र-वसन्तयो । सुगन्धौ गवि सल्लक्याम्" (हैम अने० का० २, श्लो० ४८९, ४९०), अथवा यतः सुरैः भी भयं संपादितम् तेन संपादितसुरभीकेन अत्र नकार-णकारयो साम्य ज्ञेयम् । "कवर्गैकस्वरवति" [२।३।७८] इति सूत्रेण 'सुरभीकेण' इति प्रयोग साधु. ।

५ कुः पृथ्वी, तत्सरक्षणे लीनता सा एव एक स्वभावो यस्य तेन, अथवा–उच्चकुलता तदनुसारी एक. स्वभावो यस्य तेन ।

६ राजहसाना कर', राजहसकरः पादे लग्नः पादलग्नः । पादलग्नः राजहसकरो यस्य तेन राजहसा उत्तमनृपा', तेषा करः यस्य पादे लग्नः अर्थात् उत्तमनृपा अपि नमन्तः यस्य पादे स्वकरेण स्पर्श कुर्वन्ति । "राजहसस्तु कादम्बे कलहसे नृपोत्तमे"–(हैम अनेका० का० ४, श्लो० ३४७)

७. विषय. देश: तस्य सुखम्—स्वदेशजनसुखरसिकस्य अथवा विषयाः शब्द-रूपादय. तत्सुखरसिकस्य ।

८ द्विरेफा एव पुञ्जा, पुञ्जो हि शरपृष्ठम् ।

९. कुसुमकार्मुकः स्मरः काम'–अनङ्ग, तस्य सायका वाणा इव ।

१०. यथा कनकाचलः मेरु' दारसहितानाम् अमराणा देवानाम् उचितः विचित्रः विनोदरूपः तथा सन् शोभन' आराम उद्यान तत्र यो रोचित. विचित्रश्च विनोद' यस्य तस्य तादृशनृपस्य अथवा 'सदा सततम् आरामः' अन्यत् पूर्ववत् ।

११. [ सदाराणा सभार्याणाम् अमराणा देवानाम् उचिता योग्या विचित्रा अनेके विनोदा

विनोदस्य, कदाचिदिन्दुवदनावदातवदनसमुदयेनाभिषेणयितुमिव गगनगिरिसमारूढसुधा-दीधिति समारुह्य क्रीडाचलचूलिकामानन्दरस योगिन इव विलसत्परमहं-सलीलमनुभवतः ।

कदाचिच्च काचिद् अपामरमञ्जनमनोहर रूप बिभ्राणा घनतरलहरिसमुल्लासितरङ्गा विख्यातरुचि-र-विभवा काचिद् विशदाम्बरधरा सुरसंगता सुरतरङ्गिणी, काचित्

यत्र मेरौ स तथा तस्य, मणिरथस्य तु सति शोभने आरामे रोचिताः विचित्रा विनोदाः यस्य तस्य ।]

१. गगनगिरि० इति पदम्, 'अभिषेणयितुम्' इत्यस्य कर्म, अभिषेणयितुम्–सेनाम् अभिमुख कर्तुम् आक्रमण कर्तुम् ।

२. समारुह्य–अस्य 'क्रीडाचलचूलिकाम्' इति पद कर्मरूपम्, 'योगिनः' इति षष्ठ्यन्त पदम् ।

३. [ विलसन् परः प्रकृष्टो महः उत्सव. यत्र तम् आनन्दरस, सलील लीलया सहितम् यथा भवति एवम् अनुभवतः योगिपक्षे विलसन्ती परमहसस्य परमात्मनो लीला यत्रानन्दरस तम् अनुभवतः ।]

अत्र 'लीला'शब्द विना 'परमात्मनो लीला'रूपे अर्थे वाच्ये परमहसस्य लीला ताम् अनु-भवतः इत्यर्थो न घटेत अतः अत्र योगिपक्षे 'लीलम्' इत्यस्य स्थाने 'लीलाम्' इति उचितम् । यद्यपि ललनं लीलः इति भावे घञि निपातनात् 'लील'शब्दोऽपि साधयितु सुकरः पर स साहित्ये अप्रसिद्धः, 'लीला'शब्द एव विश्रुतः ।

४. [ काचिदन्तःपुरी कर्मतापन्ना अपामरा–अग्रामीणा मा–लक्ष्मीर्यस्य तज्जनमनो हरती-त्येवविध रूप बिभ्राणा । जलक्रीडातो घनतराभिर्लहरीभिः कल्लोलैः समुल्लासितो रङ्गो यस्या सा तथा ।]

उत्तमम् अथवा अपगता अमरा यस्मात् तद् अपामरम्–देवरूपादपि अधिकम् अञ्जनमनो-हर रूपम् । अत्र 'जनमनोहरम्' इत्यर्थे कर्तव्ये 'अपामरमञ्जन०' इत्यस्य 'अपामरमम्+जन०' इत्येवविभागो बोध्य., पश्चात् सन्धौ 'म्'इत्यस्य अनुनासिके ञत्वे 'अपामरमञ्जन०' इति निष्पन्नम् । द्रष्टव्यम् सिद्धहेमव्याक० १।३।१४ ।

५ शुद्धान्तवधू उपमेय विशेष्यम्, अन्यानि पूर्वोक्तानि सर्वाणि उपमानानि विशेषणानि । तथाहि–नदी अञ्जनमनोहर दिग्गतगजमनोहर जलरूपं बिभ्राणा, शुद्धान्तवधू नेत्राञ्जनमनोहर रूप बिभ्राणा, सुरतरङ्गिणी देवनदी घनतरलहरिसमुल्लासि-तरङ्गा अथवा घनतरलहरिसमुल्लासित-रङ्गा । देव-नदीपक्षे रङ्गो विष्कम्भः विस्तारः । शुद्धान्तवधूः अपि ईदृशी, अत्र तरङ्गपदेन उदराधःस्थितत्रिवली-तरङ्गाः ज्ञेया । रङ्गपदेन च नृत्य ज्ञेयम् । "अञ्जन मषी । रसाञ्जनेऽक्तौ सौवीरेऽथाऽञ्जनो दिग्गतङ्गजे" –(हैम अनेकार्थ० का० ३, श्लो० ३८२, ३८३)

६ [ विख्यातो विदितो रुचिरः प्रधानो विभवो विभूतिर्यस्या सा तथा । अथ सा विख्यातरुचि. रविगदित्याद् भवतीति विख्यातरुचि-रवि-भवा यमुनानदी सा तु अपा पानीयानाम अरम् अत्यर्थम् अञ्जनमनोहर श्यामम् आकार बिभ्राणा । घनम् अत्यर्थ तरलो चलनावस्थाया चपलो यो हरि. कृष्णस्तेन समुल्लासितस्तरङ्गाः यस्याः सा तथा ।]

७ [ काचिदन्तःपुरी विशदानि अम्बराणि वस्त्राणि धारयति ।]

1 'कारामा' खलु ।

कमलैरवभासमाना ऽऽमोदं धारयन्ती सदावर्तनाभि-रमणीया नर्मदा, काचिद् गोत्रस्खलनेऽप्य-स्खलितस्वभावा समुल्लसितोत्कलिकाविलासा गम्भीरा; काचिदुल्लसत्कङ्कणा सदा नीरैकसत्त्व-सन्तोषपोषिका, पतिसेवनोद्यता, करतो-या-जलकेलिकौतूहलसरलचेतस, केलिसरसीसमुद्रे

देवनदीपक्षे अम्बर गगनम् । वधूपक्षे अम्बर वस्त्रम् ।

८. [सुरस शोभनानुराग गता प्राप्ता तथा सुरते संभोगे रङ्गो विद्यते यस्याः सा तथा ।]

नदीपक्षे सुरैः सगता अथवा सुरस गता–सुजल प्राप्ता । वधूपक्षे सुरस सुन्दर शृङ्गारादिरस प्राप्ता ।

९. [नदी सुरतरङ्गिणीगङ्गा विशद निर्मलम्, अम्बरम्–आकाश धरा आधारभूता पृथ्वी च यस्याः सा आकाशगङ्गा इत्यर्थ. । सुरैर्देवैः संगता युक्ता ।]

नदीपक्षे स्वर्गगङ्गा । वधूपक्षे सुरत रङ्गवती । सुरत प्रसिद्धम् ।

१. [काचिदन्तःपुरी कं पानीयम् अवभासमानामोद शोभायमानपरिमल, अलकैः–कुटिलकेशैः कृत्वा धारयन्ती ।]

२. [सदावर्तया नाम्या तुन्दकुपिकया रमणीया ।]

देवनदीपक्षे सता शोभनेन अथवा सदा नित्यम् आवर्तनेन अभिरमणीया । आवर्तनं जल-भ्रमणम् । वधूपक्षे विद्यमानावर्तया नाम्या रमणीया अथवा केशाना सता सदा वा आवर्तनेन अथवा अङ्काना सता सदा वा आवर्तनेन अभिरमणीया ।

३. [नर्म ददातीति नर्मदा नदी तु कमलैः कैरवैर्भासमानम् आमोद परिमल धारयन्ती । सदा नित्यम् आवर्तनैर्भ्रमत्पानीयविवरैः अभिरमणीया नर्मदा रेवा ।]

नदीपक्ष नदीनाम । वधूपक्षे रागरसदा हास्यदा ।

४. [काचिदन्तःपुरी गोत्रस्खलनेऽपि भ्रमात सपत्नीनामग्रहणेऽपि अस्खलितः स्वभावो यस्याः सा तथा । अत एव समुल्लासितोत्कलिका उच्छलितोत्कण्ठा विलासा यस्या. सा तथा । तत एव गम्भीरा अज्ञापितात्मीयकालुष्या । नदी तु गम्भीराख्या गोत्रेषु–पर्वतेषु स्खलनेऽपि अजातमालिन्या ।]

५. [समुल्लासितउत्कलिकाना कुर्मीणा विलासो यस्या. सा तदा ।]

नदीपक्षे उत्कलिकाः–तरङ्गा. । वधूपक्षे उत्कलिका–उत्कण्ठा ।

६. [काचिदन्तःपुरी करे तोय पानीयं यस्याः तथा । अत एवोल्लसन्ति कङ्कणानि यस्याः । उल्लसन् क पानीय तस्य कणा लघुबिन्दवः यस्याः सा तथा ।]

नदीपक्षे कङ्कण मौलिभागः शेखरभागः । वधूपक्षे कङ्कण करस्य आभूषणम् ।

७ [सदा नित्य निर्गता रैका लक्ष्मीर्यस्या. सा नीरैका सा सत्त्वाना जीवाना सतोषं पुष्णाति । सदा सर्वदा नीरस्य एकेऽद्वितीया ये सत्त्वास्तेषा सतोष पुष्णाति ।]

नदीपक्षे सदा नीरेण एकेषाम् अन्येषा सत्त्वाना प्राणिना सतोष पोषयति । वधूपक्षे सदा नीरेण नीरदानेन उपलक्षणात् दानधर्मेण एकेषा सत्त्वानां सतोष पोषयति ।

८. [पत्युर्मणिरथस्य सेवनोद्यता । पत्युः समुद्रसेवनोद्यता ।]

नदीपक्षे पतिसेवनम् समुद्ररूपपत्युः सेवनम्, वधूपक्षे स्वपतेः सेवनम् ।

९ [अथ च करतोयाऽऽख्या नदी ।]

नदीपक्षे एतन्नाम्नी नदी । वधूपक्षे करे तोय यस्याः सा ।

1 °लागस° डे । 2 सदानैरै° डे । 3 °लिकुतू° ल ।

निम्नगा इव शुद्धान्तवधूः सस्पृह मज्जयतः, स्वयमपि सर्वावसरदानमिव श्रीमज्जनानन्दकारणं प्रस्तावयत ।

कदाचित् स्वकीयमिव सन्तान भद्रजातितिलक, हरिवंशमिव दानवारिराज्यालङ्कृतं, पाण्डित्यमिव अक्षूणलक्षणालङ्कारसाहित्य, निजसैन्यमिव करदण्डताडितविपक्षलक्षं, लोकाग्रमिव मस्तकस्थिताव्यक्तमुक्त, सौराज्यमिव सप्ताङ्गसुप्रतिष्ठ, सुरेन्द्रवृन्दमिवानेकपविराजित,

अथवा करतो या इत्येव पदविभागे या शुद्धान्तवधू जलकेलिकौतूहलसरलचेतसः प॰यु नृपस्य सेवनोद्यता अर्थात् नृ। स्वहस्तेन स्नपयन्ती दृश्यते इत्यपि आशयो व्यज्यते ।

१ [ नदीपक्षे नदी हि निम्नगा भवति । वधूपक्षे मज्जनावसरे मज्जनकारयित्री निम्नगा भवति–नीचैर्नता भवति । ]

२ श्रिया उपलक्षित मज्जनानन्दिस्नाने हर्षकृत् कारण स्नानोपकरण पुष्पफल-कुङ्कुमादिरूप हेतु प्रस्तावयतः । किमिव ? सर्वावसरदानमिव । श्रीमता लक्ष्मीपतीना जनानाम् आनन्दि हर्षकारण प्रस्तावयतः ।

श्रीयुक्त शोभन मज्जन तदेव आनन्दकारणम् अथवा श्रीमता जनानाम् आनन्दकारणम् ।

३ [ सुप्रधाना, मध्ये । ]

अत्र गजराजम् अधिरुह्य इति प्रधान पदम् । 'भद्रजातितिलकम्' इत्यादीनि गजराजविशेषणानि । तथाहि–गजराजं सन्तानमिव भद्रजातितिलकम् । गजपक्षे सतानम् अपत्यरूपम् , भद्रजातितिलकम् "भद्रो मन्दो मृगो मिश्रः चतस्रो गजजातयः" (अभिधान॰ का॰ ४, श्लो॰ २८४) इत्येव भद्रादिजातिषु गजेषु तिलकरूपम् , सतानपक्षे भद्रजातिः उत्तमजाति तत्र तिलकरूप संतानम् ।

४ [ दानवारि॰–नारायणस्य । ]

गजराज हरिवंशमिव दानवारिराज्यलंकृतम् । गजपक्षे दानवारि मदजलम्, तस्य राजिः–श्रेणिः तया अलकृतम् । अत्र '॰राज्या अलङ्कृतम्' इति पदविभाग । हरिपक्षे दानवारिः श्रीकृष्णः तस्य राज्येन अलङ्कृत हरिवशम् । अत्र '॰राज्याऽलङ्कृतम्' इति समासयुक्त पदम् ।

५. गजराजपक्षे गजस्य यानि अक्षूणानि पूर्णानि लक्षणानि तेषाम् अलकारसहितम् अथवा तैः पूर्णैः लक्षणैः सहितम् तथा अलकारसहित च–अलंकाराः गजस्य आभरणानि तैः सहितम् । पाण्डित्यपक्षे अक्षूणानि यानि लक्षणशास्त्राणि शब्दादिलक्षणशास्त्राणि तद्रूपाणि एव अलकाराः तैः सहितम् अलकारसहितम् , अथवा अलकारशास्त्रेण च सहितम् ।

६ गजराजपक्षे करदण्डः शुण्डादण्डः तेन लक्ष विपक्षा गजेन ताडिताः । निजसैन्यपक्षे करूपो दण्ड तेन सैन्य लक्ष विपक्षान् ताडितवत्–अताडयद् इत्यर्थः ।

७. गजराजस्य मस्तके अव्यक्ता मुक्ता मौक्तिकानि स्थिता इति प्रवाद । लोकाग्रपक्षे मस्तके अग्रभागे स्थिता अरूपित्वेन अव्यक्ता सिद्धात्मान यत्र लोकाग्रे ।

८. गजराजपक्षे सप्तभिः शुण्डा-चरणप्रभृतिभि अङ्गैः सुप्रतिष्ठित गजराजम् । सौराज्यपक्षे सौराज्यम् अमात्यप्रभृतिभिः सप्तभिः अङ्गैः प्रतिष्ठित भवति "स्वाम्यमात्यः सुहृत् कोशो राष्ट्र-दुर्ग-बलानि च राज्याङ्गानि" (अभिधान॰ का॰ ३, श्लो॰ ३७८) इत्येव प्रसिद्धानि सप्त राज्याङ्गानि ।

1 ॰नन्दिका॰ ल । 2 ॰रसहित नि॰ ख । 3॰तिष्ठित सु॰ ड ।

राजनगरमिवानेकपदातिरमणीयं, धार्मिकनिकेतनमिवाश्वादिगणभीषणं, गजराजमधिरुह्य सीमालभूपालप्रतापावरणसाटिकां राजपाटिकां समाचरतः कदाचिदास्थानमलङ्कृत्य पुरन्दरमिव सुरमन्त्रिवर्गससर्गसुभगं, सर्वगनयनन्दितोद्दामतमसमुल्लसत्समस्तगोत्रमात्मानं सुमनसां दर्शनपथं नयतः कदाचिद् याचकचमूरपि कृतशोभनदीनदानैरै रमणीयां, मध्यलोकभूमीरिव कुर्वाणस्य तस्य क्रीडाचलचूलासमारूढा इव, निमग्ना इव महानन्दसागरे, चमत्कारघनसारच्छुरिता इव, अनुलिप्ता इव परोपकारव्यापारचन्दनरसेन, कल्याणमया इव, सुखमया

१, [सुरवृन्दम् अनेकैः पविभि वज्रैः राजितम्, अनेकपैः शेषहस्तिभिर्विराजितम् ।
गजराजपक्षे अनेकपैः–हस्तिभिः विराजितं गजराजम्, सुरेन्द्रवृन्दपक्षे अनेकैः पविभिः वज्रैः राजितम् ।

१. [अनेकपदाति०–श्रीकरणावदैः ।]
गजराजपक्षे अनेकपदैः चतुर्भिः पदैः अतिरमणीयम् ।
राजनगरपक्षे अनेकपदातिभिः रमणीयं राजनगरम् ।

२. [धार्मिकनिकेतनं न श्वादिगणैर्न भषणप्रमुखसमूहेन भीषणम् । गजं तु अश्वादिसमूहेन भीषणम् ।]
गजराजपक्षे अश्वादिपङ्क्त्या भीषणरूपं गजराजम् । धार्मिकनिकेतनपक्षे श्वादीनां गणः श्वादिगणस्तस्य भीषणं श्वादिगणभीषणम्, न श्वादिगणभीषणम् अश्वादिगणभीषणम्, धार्मिकनिकेतनं हि श्वादिगणस्य अभयदायित्वेन भीषणं न भवति । अथवा धार्मिकनिकेतने श्वादयो न भवन्ति अतः तत् तैः अभीषणम् न भयजनकम् ।

३. प्रतापस्य आवरणरूपा आच्छादनरूपा–प्रतापरोधिनी साटिका ताम्–तादृशीम् ।

४. [सुष्ठु शोभना रमा लक्ष्मीर्यस्य त सुरमम्, त्रिवर्गेण सुभगम् ।] सुरमम् त्रिवर्ग० इत्यर्थे वाच्ये सुरमम् + त्रिवर्ग० इत्यत्र पूर्ववत् सर्वौ 'सुरमन्त्रिवर्गः' इति साध्यम् ।
पुरन्दरपक्षे सुराः–देवाः । नृपपक्षे सुराः–शोभनलक्ष्मीयुक्ताः ।

५. [सर्वगः सर्वत्र प्रयोज्यो नयो नीतिस्तेन नन्दितः, समृद्धिं नीतिम्, उद्दामतमम् अत्युत्कट समुल्लसत् सर्वतो विजृम्भमाणं समस्तगोत्रम् अन्वयो यस्य तम्, पुरन्दरस्तु सुरमन्त्रिणो बृहस्पतेः यो वर्गः–पक्षस्तत्संसर्गेण सुभगः । सर्वशरीरस्थानि लोचनानि । खण्डिताः, दिताः पक्षभेदात् खण्डिता उद्दामतमाः समुल्लसन्तः–उत्प्लुत्योपविश्य लोकं चूरयतः समस्ता गोत्रा पर्वताः येन ।]
गोत्रा–पृथिवी ।

६. [देवानाम् ।]

७. [कृत शोभनं दीनेभ्यो दानं यया राया, लक्ष्मीतया रमणीया । याचकचमूरर्थिपरंपराः कुर्वाणस्य । मध्यलोकभूमयस्तु कृतशोभा विहितरामणीयका नद्यः सरिता नदा ह्रदा यासु, नरैश्च रमणीयाः ।]
कृतशोभनं सादरं दीनानां दानरूपं 'र'शब्दवाच्यं सुवर्णं तैः याचकचमूः रमणीया कृता ।

1 °न दर्श° डे । 2 °भूमिरिव डे । 3 °चूडा स° डे । 4 °कारचन्द° ल । 5 सुरतमया डे ।

इव, महाभ्युदयमया इव, पुण्यनिचयमया इव, त्रि-चतुरा[1] इव भूयासो[1]ऽपि यान्ति[2] स्म वासराः[3] ।

सुदिमुदितमना मनासि नित्यं
नयति स पौरजनस्य पश्यतोऽपि ।
श्रियमिव कुमुदानि शीतरश्मि-
र्दलि[2]ततमोविकृतिः करैरतीव्रैः ॥ ८१ ॥

इति श्रीजिनभद्रसूरिविरचितायां मदनरेखाऽऽख्यायिकायां
श्रीमन्नमिचरित्रापराभिधायां मुदङ्काया प्रथम उच्छ्वासः
समाप्तः ॥

मध्यलोकभूमिरिव । अत्र नदीनदाः तथा अनराः पशु-पक्षिणः तैः मध्यभूमी रमणीया कृता । अथवा 'अ'पदेन सानूनि गिरितटभागाः, कूर्मा वा ग्राह्याः, तैः, नरैश्च मध्यभूमी रमणीया इत्यपि भावो बोध्य । एकाक्षरकोशे 'अ'वर्णस्य अनेके अर्थाः प्रतिपादिताः अत एव अत्र 'अ'पदेन सानूनि कूर्मा वा गृहीताः ।

१ भूयासोऽपि वासरा दिवसाः त्रि-चतुरो दिवसा इव यान्ति स्म अर्थात् दीर्घोऽपि कालः सुखमयत्वेन अल्पः प्रतिभासते इति आशयः ।

२. [नवर दलितनमोविकृतिः हतक्रोधविकार' । करैः राजदेयभागैः, अतीव्रैः अदुःखदैः ।

स उदितमना राजा पश्यतोऽपि पौरजनस्य मनासि नित्यं मुदिं हर्षं नयति । यथा शीतरश्मिः दलिततमोविकृतिः नाशितान्धकारविकार, कुमुदानि अतीव्रैः शीतलैः करैः किरणैः, श्रियं नयति तथा अयं राजा उदितमनाः दलिततमोविकृतिः नाशिततमोगुणविकारः अतीव्रैः मृदुभिः, करैः राजदेयैः भागैः, पौरजनस्य मनासि मुदिं हर्षं नयति । पश्यतोऽपि करदानपीडां पश्यतोऽपि पौरजनस्य मनासि मुदिं हर्षं नयति । पौरजनो हि करदानदुःखं पश्यन् अपि अनुभवन्नपि मनसा मुदं समनुभवति इति नृपस्य करग्राहकस्यापि राज्यकरणपद्धतिकौशलम् ।

॥ इति प्रथम उच्छ्वासः समाप्तः ॥

1 °रा अपि भू° डे । 2 °पि वासरा यान्ति स्म डे । 3 स्म वाराः डे ।

## द्वितीय उच्छ्वासः ।

अन्यदा च,

प्रासादोपरिभूमिष्ठो वीक्षमाण. पुरश्रियम् ।
गवाक्षे युवराजस्य दृष्टिं पातयति स्म स. ॥८२॥

ततश्च सुलभविकारतया प्रमादप्रसङ्गमदिराया., निष्प्रतीकारप्रसरतया विषविषमविषय-मूढताया., निरङ्कुशतया चक्षुरादिकरणकरीन्द्रप्रसराणां, दुर्निवारतया चपलतरान्तःकरण-केसरिकिशोरस्य, तथाविधानर्थनिमित्ततया विभवैश्वर्ययौवनमदस्य, समासन्नतया दुर्गतिगर्त्ता-वर्त्तविषमपातस्य, भवितव्यतया तथाविधविचित्रविधिविपाकस्य, सदाचारचातुरीचमत्कृतचतुर-चेतसोऽपि, निरस्तदुष्कर्ममर्मधर्मकर्मनिर्माणवेधसोऽपि, निरारेकविवेकसुधासेकातिरेकपल्लवित-विशुद्धबुद्धिकाननस्यापि, त्रिवर्गसंसर्गसारविचारविदितसंसारविपाकस्यापि, हेयोपादेयपदार्थ-सार्थसमर्थनसमर्थनिर्णयकवचितमनसोऽपि, विशालनयनरमणीगणप्रशान्तसमुद्दामकामतमसोऽपि तस्य तत्र गवाक्षे त्रिभुवननयनचकोरचन्द्रिकायां खरकरकिरणसंपर्ककर्कशोपतापभीतायामिव सङ्कुच्य समासीनायां मदनरेखाभिधानायां सौन्दर्यसुन्दर्यां लोचनयुगं समगस्त ।

सत्यात्मकं मनो यस्या यस्याः सत्यात्मकं वच. ।
सतीख्याताऽऽकृतिर्यस्यास्तेन सर्वाङ्गसुन्दरी ॥८३॥
प्रसारितकरौ नित्यं सूर्याचन्द्रमसौ यत ।
इतीव या बहि. क्वापि प्रासादान्न विनिर्ययौ ॥८४॥

---

१. "केशरी दन्त्य-तालव्यः" (—शब्दरत्ना० का० ४, श्लो० ३१९)

२ कर्मविपाकस्य—कर्मपरिणामस्य ।

३. निश्शङ्को विवेक. । आरेका—शङ्का ।

४. कवचित—कवचयुक्तम् । कवच—तनुत्र युद्धे शरीरसंरक्षणसाधनम् ।

५. 'सम्'पूर्वकाद् 'गम्'धातो' आत्मनेपदे अद्यतनीनभूतकाले तृतीयपुरुषैकवचने रूपम् । 'समगत' इत्यपि जायते ।

६ सत्य + आत्मकम् — सत्यरूपम् अथवा सती एव आत्मा स्वरूप यस्य तत् सती + आत्मकम् — सत्यात्मकम् ।

७ यस्याः आकृतिः सतीशब्देन ख्याता प्रसिद्धा ।

८ ०करौ—किरणौ हस्तौ वा । सतीस्पर्शविधानाय करौ प्रसारितौ ।

1 °यविमूढ **ल** । 2 °मित्तया **डे** । 3 °र्मसमधर्मधर्मकर्म **डे** । 4 °पि सत् वर्ग० **क**, °पि सद्वर्ग° **ल** । 5 °र्यां तस्या लो° **क** ।

चक्रे [1]चापगुणारोपात् [2]कंसोद्वेगं प्रियंवदा ।
तेन [3]यां सत्यभामेव श्रीदामोदरसंगता ॥८५॥
न च राकेन्दुना लेशोऽप्यापि यस्या मुखश्रियः ।
[4]सर्वस्वापहृतिर्यस्य [5]सतीनेऽब्ज तु कुत्र तत् ? ॥८६॥
[6]सकलोऽपि शीलकल्यां विनिर्जित खलु कलानिधिर्यस्याः ।
कथमन्यथा स दुर्गेशमौलिशिखरे समारूढः ॥८७॥
शील कुलेन कुलमपि शीलेन स्पर्द्धतेतरां यस्याः ।
तेनैव न्यूनतया कलित कुत्रापि [1]नैकमपि ॥८८॥
प्रियो वा धर्मो वा सुविहितविधानेन गुरुभि-
र्य एवाऽऽदौ दत्तः स खलु हृदि यस्याः स रमते ।
बहिर्व्यापारोऽपि प्रतिदिनमुदारेण मनसा
[2]यया चक्रे प्रायस्तदनुगत एव [3]प्रतिपदम् ॥८९॥
चित्रा भोगपरम्परा निजपतेस्तोपाय नैवात्मन-
स्त्यागोऽप्यात्ममुदे सदैव न पुनस्तस्यै यशःसिद्धये ।
धर्मायैव च जीवित न विषयोत्साहाय धर्मः पुन-
र्मोक्षायैव विवेकनिर्मलधियो यस्याः प्रशस्यावधेः ॥९०॥

या [7]चार्वाकाराधिकाऽपि, षट्पदार्थसाधकमुखारविन्दाऽपि, न्यायोद्द्योतकरमणी-

१. चापगुणस्य आरोपात् चापो धनुः, गुणः प्रत्यञ्चा । सतीपक्षे च अपगुणारोपात् ।

२. कंसस्य उद्वेगम् अथवा कं सोद्वेगम् इत्यपि पदविभागः ।

३. या मदनरेखा सत्यभामेव श्रीदामोदरसंगता यथा सत्यभामा श्रीदामोदरेण संगता तिष्ठति तथा इयं मदनरेखा श्रीदामयुक्तेन उदरेण संगता ।

४. सर्वस्यापहारः अतः तत् तु कुत्र ? इति आशयः ।

५. सतीने ! इति संबोधनम् । सतीषु इनरूपा स्वामिनीशिरोमणिः सती + इना = सतीना, अस्य संबोधनम् हे सतीने !–हे सतीशिरोमणिरूपे ! ।

६. यस्याः शीलकलया सकलोऽपि कलानिधिर्विनिर्जितः, अन्यथा स कलानिधिः–चन्द्रः दुर्गेशमौलिशिखरे दुर्गेशः–महादेवः–हरः, तस्य मौलौ–शिखरे–अग्रभागे कथं समारूढः ? अन्योऽपि विनिर्जितः पुरुषः दुर्गेशस्य–कोटस्वामिनः–प्राकाररक्षकस्य शरणे गच्छति तथा अयमपि दुर्गेशं शरणं गृहीतवान् । प्रतौ 'पिनिर्जितः' पाठः, स अत्र 'विनिर्जितः' संशोधितः ।

७. [या मदनरेखा चार्वाकान् नास्तिकान् आराध्नोति, चार्वाकाराधिका–नास्तिकमतिका १। द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायरूपाणां षण्णां पदार्थानां साधकं मुखारविन्दं यस्याः सा

1 °या नि° डे । 2 यथा च° डे । 3 प्रतिदिनम् डे ।

विभूषणाऽपि, न वौद्धत्यागोपेताऽपि, प्रकृत्याऽऽत्मादितत्त्वविचारनिष्ठाऽपि, जिनप्रवचनवासितान्तःकरणा, तस्या च नियतितया महेन्द्रजालिकविद्ययेव निजयैव दृष्ट्या मुषितयथावस्थितवस्तुतत्त्वप्रकाशकविवेकरत्नस्ता मदनरेखामेव मनसि कृत्वा चिन्तयाचकार ।

दृश्यन्ते वनिताशतानि भुवने चेतोऽपहारीण्यहो !
प्रीति यानि दिशन्ति शान्तमनसा नून मुनीनामपि ।

वैशेषिकमतिका २। न्यायोद्द्योतकरौ ग्रन्थौ तावेव मण्यौ विभूषणमाभरण यस्याः सा नैयायिकमतिका ३। न नैव वौद्धत्यागोपेता किन्तु तनुमतिका ४। सत्त्व-रजस्तमसा साम्यावस्था प्रकृतिः, आत्मा तु पञ्चविंशतितम तत्त्वम् आदिशब्दात् त्रयोविंशतितत्त्वग्रहणम् इति पञ्चविंशतितत्त्वविचारनिष्ठा साख्यमतिका ५। एवभूताऽपि जिनप्रवचनवासितान्तःकरणा इति विरोधः । तत्परिहारस्तु या मदनरेखा चारुणा शोभनेनाकारेण अधिका १। षट्पदाना—भ्रमराणाम् अर्थसाधक प्रयोजननिष्पादक मुखारविन्दं यस्याः सा तथा २। न्यायमेवोद्द्योतयन्ति न्यायोद्द्योतकास्ता एव रमण्यौ विभूषणं यस्याः सा तथा सुशीलस्त्रीभिः कृतमङ्गेत्यर्थः ३। नव नूतन यद् औद्धत्यम् अहकारस्तल्लक्षणादागसोऽपराधादपेता अपगता ४। प्रकृत्या स्वभावेन आत्मादीना जीवाजीवाना जीवाजीवास्रव-सवर-निर्जरा-वन्ध-मोक्षाणा तत्त्वाना विचारे निष्ठा यस्याः सा तथा ५ । ]

चार्वाकाराधिका अपि षट्पदार्थसाधकमुखारविन्दा अपि या सती चार्वाकस्य आराधिका सती कथं षट्पदार्थसाधकमुखारविन्दा ? या चार्वाकाराधिका स्यात् सा तु केवल पञ्चभूतसाधिका स्यात्, न षट्पदार्थसाधनपरा इति विरोधः, तत्सूचनार्थं च 'अपि'शब्दः । चारुः आकारः—शोभनः आकारः तेन अधिका इति चार्वाकाराधिका इति ।

तथा षट्पदः—भ्रमरः तदर्थसाधक तत्प्रयोजनसाधक मुखारविन्द यस्याः सा इति विरोधपरिहारा या षट्पदार्थसाधिका सा कथ न्यायोद्द्योतकररूपो मणिः तत्र विभूषणरूपा न्यायोद्द्योतकरमणीविभूषणा ? वैशेषिको हि पदार्थसाधन करोति न्यायोद्द्योतकरस्तु गौतमानुयायी षोडशपदार्थसाधनं करोति इति विरोधः, परिहारस्तु न्यायस्य—न्यायमार्गस्य या उद्द्योतका रमणी सा न्यायमार्गोद्द्योतकरमणी तासु विभूषणा अर्थात् न्यायमार्गानुसारिजीविता ।

या च न्यायोद्द्योतकरानुयायिनी सा अवश्य वौद्धत्यागोपेता (त्याग + उपेता) बौद्धदर्शनत्यागयुक्ता भवेत्, इय तु न्यायोद्द्योतकरमणीविभूषणा अपि न वौद्धत्यागोपेता इति विरोधः । परिहारस्तु नवम्—नवीनम्, औद्धत्यम्—उच्छृङ्खलता तद्रूप यद् आगः—अपराधः, तेन अपेता रहिता नवौद्धत्यागोपेता इति । अत्र विरोधप्रदर्शने व-वयोः ऐक्येन 'न वौद्धः' इति ज्ञेयम्, न—निषेधे, 'वौद्धत्याग + उपेता' इति पदविभागो वोध्यः । विरोधपरिहारपक्षे नवीनार्थवाची 'नव'—शब्दो ज्ञेयः । नव + औद्धत्य० 'नवौद्धत्य' इति सधिः ज्ञेयः, अत्र 'व' न वोध्यः किन्तु 'व' वोध्यः । औद्धत्य + आगस् + अपेता इति औद्धत्यागोपेता । नव + औद्धत्याऽऽगोऽपेता नवौद्धत्यागोऽपेता अर्थात् नवीनस्य औद्धत्यस्य यः अपराधः तेन अपेता रहिता—मर्यादावती स्वाचारपालनपरायणा गर्वरहिता च इति भावः ।

या वौद्धत्यागोपेता—वौद्धदर्शनपरिहारयुता न स्यात् सा कथ प्रकृत्यात्मादितत्त्वविचारस्तु साख्याना, न तु वौद्धानाम् इति विरोधः । परिहारस्तु या जिनप्रवचनवासितान्तःकरणा अतः प्रकृतिं जैनविचारप्रसिद्धा कर्मप्रकृतिम्, तथा तत्प्रसिद्धमेव आत्मतत्त्वादिकम्, तस्य विचारनिष्ठा भवत्येव इति ।

एतस्याः परमन्यदेव किमपि त्रैलोक्यतोऽप्यद्भुतं
रूपं यस्य निरीक्षणेन परमानन्दोऽयमुज्जृम्भते ॥९१॥

ततो नूनमस्याः प्रसरन्निष्प्रतिमल्लधम्मिल्लमल्लपराभूतनिजकलापतया कैलापिना प्रभुरकारि तौरकारिः । नूनमस्याः सविभ्रमभ्रूचापयुगेनैककुसुमकार्मुकाभिरामोऽपि त्रिभुवनजिगीपुः शैम्बरारिः, नूनमस्या नयनारविन्दप्रतिच्छन्दारविन्दयुगसुभगतया कैमलयाऽपि पतिरलभ्यत मुरारिः । नूनमस्याः समुन्नतसँरलनासावशरामणीयकानुमोदनया कयाचिदुन्नतिमन्त सरलाश्च सन्तः । नूनमस्या दशनौष्ठगरिष्ठप्रभाप्राग्भारानुकारसारैर्मुक्ता-विद्रुमाधारतया क्षारनीरधिरपि रत्नाकरः समुद्रः, नूनमस्या वँदनसोदरसुधाकरकलाकलितभालतया महेश्वर एव तथाविधोऽपि रुद्रः । नूनमस्याः कैर्णपालिकालङ्कारकुण्डलाकारतया विधुरविग्रहावपि जगदुपरि संवृत्तौ रजनिपतिदिनपती[2] । नूनमस्याः कैण्ठकन्दलरेखाङ्कपतितदासतया[3] शब्दगाम्भीर्यतोऽनन्यः[4] समजायत पाञ्चजन्यः । नूनमस्या वाहुलता-पताकाभ्यामनुमीयते नौकनागपुरतोऽप्येष मर्त्यलोको धन्यतयाऽधिकमन्यः । नूनमस्या पौणिपल्लवलावण्यलवकलितकिशलययोगादशोकः स्फुटमशोकः ।

१. मयूरेण ।

२. तारकाः मयूरपिच्छेषु ये चन्द्रकरूपाणि चिह्नानि ते, तारक एव, प्रभुः—समर्थः अरिरूपः अकारि । धम्मिल्लमल्लपराभवाय कलापिना समर्थः अरिरूपः तारकगणो व्यधायि इति भावः ।

३. कामदेवः ।

४. कमलायाः लक्ष्म्याः नेत्राणि मदनरेखानयनारविन्दसमानानि अत एव सा मुरारिणा स्वीकृता इत्येवं मदनरेखानयनसादृश्यसामर्थ्येनैव कमलया मुरारिः पतिः अलभ्यत इति आशयः ।

५. मदनरेखायाः सरलायाः उन्नतायाश्च नासायाः रामणीयकस्य सौन्दर्यस्य अनुमोदनया अर्थात् तत्सौन्दर्यानुमोदकाः अतः सन्तः—सज्जनाः सरलाः उन्नताश्च ।

६. अस्याः मदनरेखायाः दशनाः मुक्तारूपाः, ओष्ठाश्च विद्रुमरूपाः । तद्दशनसमानमुक्तानां तदोष्ठसमानविद्रुमाणां च आधारः समुद्रः स च क्षीरनीरधिरपि अतः एव कारणात् 'रत्नाकर'—नाम्ना विश्रुतः । पाठान्तरे तु क्षारनीरधिरपि सागरः 'रत्नाकर'नाम्ना प्रथितः ।

७. वदनसोदरसुधाकरकलाकलितम् अस्याः भालम्, एत एव सा सौम्यगुणयुक्ता, परन्तु महेश्वरस्तु अस्या सुधाकरकलाया अपहारकत्वेन सुधाकरकलाकलितोऽपि रुद्रः विशेषभयङ्करः ।

८. मदनरेखायाः कुण्डले कर्णपालिकालंकाररूपे, एतौ रजनिपति—दिनपती तत्कुण्डलाकारानुकारिणौ, अत एव तौ विधुरविग्रहौ—विग्रहविकलौ—शरीरहीनौ भूत्वा जगदुपरि संवृत्तौ अर्थाद् ऊर्ध्वमेव प्रस्थितवन्तौ ।

९ पाञ्चजन्यः—शङ्खः मदनरेखायाः कण्ठकन्दलरेखाङ्कस्य पतितो दासः अत एव शब्दगाम्भीर्यतः अनन्यः सजातः ।

१०. नाकपुर—स्वर्गपुरम्, नागपुरं—नागलोकपुरम् । अस्या वाहुलतारूपपताकाभ्यां ताभ्यामपि द्वाभ्यां पुराभ्यां मर्त्यलोक एष स्वम् अधिकं धन्यं मन्यते ।

११. अशोको नाम वृक्षः यथार्थतया अशोकः यतः अस्य वृक्षस्य पल्लवेषु अस्याः पाणिपल्लवयोः लावण्यस्य लवो विद्यते ।

---

1 °पुः सवरा° डे । 2 °दिनमणी डे । 3 °रेखा कपति तद्दास डे । 4 °तोऽमान्यः डे ।

नूनमस्याः कुचकलशविलासविभ्रमेणाभ्रमुवल्लभस्यापि कुम्भयोरजनि जनितानन्दः पुरन्दरकरास्फालनकेलिसमारम्भः। नूनमस्या मुष्टिप्रविष्टावलग्नसधर्ममध्यतया पञ्चाननस्य मृगेन्द्राभिनिवेशः। नूनमस्याः सुरेखलेखनाभिनिवेशैकदेशगाम्भीर्यतस्तरङ्गिणीनां तीर्थव्यपदेशः। नूनमस्या विशालनितम्बबिम्बराजधानीविभुतया रतिपतिरनङ्गोऽपि सप्ताङ्गराज्यस्वामिनोऽपि किङ्करीयति। नूनमस्या ऊरुदण्डाखण्डाभिरामतया रम्भास्तम्भानामृद्धिवृद्ध्यादिषु पुरःसरत्वम्। नूनमस्या यथोक्तगुणसघंजङ्घार्पितश्रीलवेन सुभटैरपि सन्निधीयते पृष्ठतस्तूणीरः। नूनमस्याश्चरणानुकरणसबलस्थलकमलभीरुतया न त्यजन्ति जलदुर्गं पद्मानि।

इत्याद्यनल्पविकल्पश्रेणिनिःश्रेणिकया तस्य समारूढश्चेतश्चन्द्रशालायां दुर्वारमारवीरः। तदनन्तरमेव निरस्तसमस्तविकारेणापि पलायित सदाचारेण कुलकलङ्कपङ्कप्रक्षालनसज्जयाऽपि

१. [अभ्रमुवल्लभस्य–ऐरावणस्य।]
अभ्रमुप्रियो हि पुरन्दरगजः–इन्द्रहस्ती, तस्य कुम्भौ अस्याः मदनरेखायाः कुचकलशविलासविभ्रमयुक्तौ अत एव तौ अभ्रमुप्रियकुम्भौ स्वस्वामिनः पुरन्दरस्य करास्फालनकेलिसमारम्भमपि आनन्दजनकं मन्यते इति आशयः।

२. मदनरेखायाः मध्यं मध्यभागः कटिप्रदेशः मुष्टिप्रविष्टः–मुष्टिग्राह्यः, पञ्चाननस्यापि कटिप्रदेशः तत्समानः अत एव तस्य मृगेन्द्रता।

३. तस्याः नाभिनिवेशः–नाभिप्रदेशः सुरेखलेखः–विशेषतो गम्भीरः, तन्नाभिप्रदेशैकदेशस्य गाम्भीर्यं तरङ्गिणीषु विद्यते अत एव तासां तरङ्गिणीनां तीर्थत्वम्।

४. अस्याः विशालनितम्बबिम्बरूपा स्वीया राजधानी इति मन्यमानः अनङ्गोऽपि रतिपतिः सप्ताङ्गराज्यस्वामिनः नृपान् किङ्करीयति–किङ्करान् इच्छति अर्थात् ते सप्ताङ्गराज्यस्वामिनोऽपि अनङ्गस्य किङ्कराः इति।

५. लोके हि शुभकर्मणि रम्भास्तम्भा आरोप्यन्ते, आरोप्यमाणास्ते ऋद्धिवृद्ध्यादिषु अग्रेसराः शकुनरूपाः गण्यन्ते। ते रम्भास्तम्भाः मदनरेखायाः ऊरुदण्डस्य अभिरामतां धृतवन्तः अत एव ते शुभकर्मणि ऋद्धिवृद्ध्यादिषु अग्रेसराः–पुरस्सराः।

६. अस्या जङ्घाभ्यां स्वीयः श्रीलवः तूणीरस्य समर्पितः, अत एव सुभटाः तुणीरं पृष्ठतः सन्निदधति। तूणीरो हि शराश्रयः–बाणभरणस्थानम्।

७. स्थलकमलानि हि अस्याः चरणौ अनुकुर्वन्ति, अतः तानि सबलानि जातानि, तेषां भयात् जलजानि–पद्मानि स्वरक्षणस्थानं जलदुर्गं–जलप्राकारं भयेनेव न त्यजन्ति।

८ "अधिरोहिण्यां निःश्रेणिः निर्विसर्गा–ऽविसर्गयुक्।" (–शब्दरत्ना० का० ४, श्लो० ५२)। अयं 'निःश्रेणि'शब्दः महाभारतेऽपि प्रयुक्तः इति विशेषतः प्राचीनः।

९ चेतः–मनः एव चन्द्रशाला चेतश्चन्द्रशाला "चन्द्रशाला शिरोगृहम्" (–अभि० चिं० का० ४, श्लो० ६१)।

1 °लेखसनाभिनाभिनि° डे। 2 °घसङ्घा क। 3 °स्थलभी° क। 4 °दुर्गप° डे। 5 °ल्पश्रेणिकया डे। 6 °ढश्चित्त च कल।

प्रस्थित[1] लज्जया, प्रतिहतसहृदयहृदयसंतापकापवादयाऽपि विगलितं मर्यादया, त्रिभुवनभवन-धवलनिष्ठया[3]ऽपि सङ्कुचित यशःप्रतिष्ठया, निर्दलितदुर्वारप्रसरान्तरङ्गारिपड्वर्गपराक्रमेण नष्टं कुलक्रमेण, भविष्यदपकीर्तिपाणिपीडनगणकेनेव[1] पुरोभूत रणरणकेन,[2] प्रदीपितानुरागसमिद्-[3][4] व्यतिकरेण समासन्नीभूत दुरध्यवसायवैश्वानरेण, समर्पितविचित्रचिन्तालाजाञ्जलिसर्गेण[5] समुल्ल-सित दुर्नीतिसखीवर्गेण, सकलमपि राज्यधर्ममपहाय प्रतिदिन समारुह्य प्रासादोपरिभूमिकायां व्यापारयति तत्र गवाक्षे नयनानि न पुनर्निद्राभावतः शय्यापालिका विरचयितुं[5] शयनानि । तस्या. कृशोदर्या हृदयदरीमध्यमधिवस्तुमिव प्रतिक्षण क्षपयस्तनुं नयति तानवं, न पुनः शोष-मुद्दामखेदार्णवम्, अत[6] एव तामेव देवतामिव मन्यमानो[7] मुनिरिव विषयव्यामोहविलुप्तचेतनः स भूपतिरवधीरयाचकार पुण्यमिव षाड्गुण्य,[6] विस्मारयामास सदभ्यस्तमपि शास्त्रमिव शस्त्र, न च हृदयचक्षुषाऽपि, विलोकयाचकार तपोबलमिव दलित[8]प्रबलारिकुलं चतुरङ्गबल,[7] न विगणया-बभूव दीक्षामिव निर्वृतिवधूसपादनबद्धकक्षा महामात्यशिक्षां, न च विद्यामिवानवद्यामपि कामपि शुद्धान्तवधूं मानयांचकार । ततश्च न केवल धर्म-मोक्षाभ्याम्[9] अर्थ-कामाभ्यामपि स र्वनीभ्रस्यते[8] स्म । तथापि[10]—

१ गणकः—मुहूर्तवेदी ज्योतिषिकः । पाणिपीडने—विवाहप्रसङ्गे हि गणकः पुरोभवति—अग्रेसरो भवति ।

२ उत्कण्ठा—औत्सुक्यम् ।

३. प्रदीपितः—प्रज्वलित ।

४. समिद् इति होमेन्धनम् । व्यतिकरः संबन्धः । वैश्वानरः—अग्निः स चात्र दुरध्यवसायः—दुष्टो विचारः ।

५. अपकीर्तिपाणिपीडने अत्र विचित्रचिन्तारूपो लाजाञ्जलिः, एतत्समर्पकश्चात्र दुष्टनीतिरूपः सखीवर्गः ।

६. "सन्धि-विग्रह-यानान्यासन-द्वैधा-ऽऽश्रया अपि षड्गुणाः" (—अभि० चिं० का० ३, श्लो० ३९९) । सन्धि.—एकत्वम् । विग्रहः—स्वस्थानात् परमण्डले दाहविलोपादि । यानं—यातव्यं प्रति यात्रा । आसनम्—विग्रहादिनिवृत्तिः । द्वैधम्—एकेन सधाय, अन्यत्र यात्रा, अथवा बलवतोर्द्विषतोः मध्ये द्वैधीभावेन वर्तनं यात्रा अन्यद् विचारेण अन्यद् इति द्वैधम् । अशक्त्या बलवतः आश्रयः, इत्येवं राजनीते. षड्गुणाः । षड्गुणाना भावः षाड्गुण्यम् अथवा शम-दम-शौच-तपःप्रभृतयो गुणा अपि ग्रहीतु शक्याः ।

७. हस्ति-अश्व-रथ-पदातिलक्षण चतुरङ्गबलम् ।

८. भ्रशधातोः यङन्त रूप द्रष्टव्यम्, हैमं सूत्रम्—४।१।५०। अत्र 'व'स्थाने 'ब'वर्णः उचितः तथा 'स्य'स्थाने भ्रशधातोः 'श'सहितत्वेन 'श्य'वर्णः उचितः ।

पुनः पुनः भ्रंशसूचनाय अथवा अधिकभ्रंशसूचनाय इद रूप प्रयुक्तं ग्रन्थकृता ।

1 प्रस्थितस° डे। 2 °हत हृदय क । 3 °नविष्ठ° डे । 4 प्रसीदिता कल । 5 विचरितुं डे । 6 अत एता° क। 7 °नो यतिरिव डे । 8 'दलित°' पद पतितं डे आदर्शे। 9 °क्षाभ्यामपि स कल। कल। 10 तथाहि डे ।

तेषु श्रीकरणाभिरामविषयग्रामेष्वनास्थापर.
　　प्रोद्दामा रतिरेव वैभवसुखे त्यक्तस्पृहो विग्रहे ।
अस्थानेऽप्यलमक्षमारहितता धत्ते स यद्यप्यसौ
　　भूपालस्तदपीष्टयोगघटना न प्राप निर्वाणदाम् ॥९२॥

किञ्च,

मैत्री तेषु मनोरथेषु सतत येषा प्रियैकैव सा
　　यच्चित्तं स्मृतिगोचर नयति ता तत्र प्रमोदोदय. ।
दृष्ट्वा ता न ददर्श दृष्टिरपि या ता प्रत्यनुक्रोशवान्
　　माध्यस्थ्य क्वचिदेव नास्य यदिद कामान्धबुद्धौ कुत. ? ॥९३॥
रजनिरियमुदारता राकेन्दुर्दिनमिदमुष्णकराऽस्तदोषमेवम् ।
न स किमपि विवेद खेदचित्तः स्मरविषमज्वरवेदनार्तचित्त ॥९४॥

ततश्च कथं नाम कामगेहिनीतोऽपि नाधिकत्वं बिभर्ति, यतो मारोऽपि तामपहाय गृहीतचापपर्यष्टेरेनामेवानुगच्छति । प्रतिहन्ति चापर पश्यन्तमपि । ततोऽस्या एव विहित-विभ्रमभ्रमरानन्द नयनारविन्द, अस्या एव स्मराध्वरयूपानुरूप रूप, अस्या एव निरस्तपद्मा-लयाभाग्य सौभाग्यं, अस्या एव प्रतिहतपुरन्दरप्रियाहङ्कार. शृङ्गार., किमपर सकलमप्यस्या एव विचेष्टित सार, तरुणजनमन.कुरङ्गसयमनवागुराऽऽकार, कथमिय विलासरङ्गशाला, मम बाला भविष्यत्यनुकूलेति निजचिन्ताऽऽकूताभ्या सूत्रधाराभ्या सूत्रयामास तानिमानु-पायविकल्पप्रकारानिति—

कि गत्वा स्वयमेव सेवक इव प्रस्तावत. प्रार्थये
　　दूतीसूक्तिमुखेन वा घटनया विज्ञापयामि स्फुटम् ।

१. अल-पर्याप्तम्-पर्याप्तया । अक्षः-आत्मा तस्य मार'-विनाशः तस्य हितता-हितभावरूपा वृत्तिं दधानः अर्थात् अय कामान्धो नृपः अस्थानेऽपि पर्याप्तभावेन स्वात्मनाशकरीं वृत्तिं दधाति ।

२ अय कामान्धो नृप' स्वमनोरथसमानमनोरथेषु मैत्रीवृत्तिं धत्ते । यो जनः तच्चित्त तत्प्रिया प्रति नयति तत्र प्रमोदवृत्तिं धत्ते । यस्तु प्रिया दृष्ट्वाऽपि ता प्रति पुनर्न दृष्टिं दधाति तं प्रति अनुक्रोशवृत्तिं-कारुण्यवृत्तिं धत्ते । अस्य न क्वापि माध्यस्थ्यम्, कामान्धबुद्धौ तु माध्य-स्थ्य कुतः सभवि ? ।

३. चिन्ता-प्रसिद्धा, आकूत-मनोऽभिप्राय', ताभ्याम् ।

1 °रियमुदा° डे । 2 °यष्टिरे° डे । 3 निजचित्ताकू° डे । 4 दूतिव्यक्ति° डे ।

यद्वा समुखयामि चारुचरिता ता त्यागलीलायितै–
देव[1]. काष्ठमयोऽपि जल्पति ततोऽस्त्येवेति गीर्लौकिकी ॥९५॥
यद्दूरस्थमतीव दुर्गमतमं कामं भृशं दुर्लभं
तत्[1] त्यागान्न समीपमेव सुगमं सुप्रापमप्यङ्गिनाम् ।
येनैषा भ्रमरालिका[2]ऽम्बरचरी दुर्गारविन्दालया
दानादेव कपोलचुम्बनपरा मातङ्गमप्यञ्चति ॥९६॥

ततः प्रभृति च सम्भोगरङ्गसहकारकमूलानि, प्रशमदमसंयमैकशूलानि, वदनारविन्दभूषणानुकूलानि, निर्विकारतालताप्रतिकूलानि, शृङ्गाररसारव्यापारवेषविशेषदुकूलानि, पञ्च[2] सौगन्धिकानि ताम्बूलानि प्रतिष्ठितसुवर्णवर्णोपमानि, सकलाङ्गरागपरभागललामानि, रमणीगणहृदयाभिमतसंगमानि, समूलोन्मूलितक[3]रणसंयमानि जात्यानि कुङ्कुमानि, पु[4]रस्कृतसारघनसार[3]तूलिकाः, समुच्छ्वासितनासापुटानन्दसपत्तिपूरिकाः, विरतिकल्पलतासमुल्लासोल्लरिकाः[5], मदनाङ्गनागल्लमसूरिकाः[6] कस्तूरिकाः, दुर्वारप्रसरविकारशरनिकरभस्त्राणि, जितयतित्याजिततपोदिव्यास्त्राणि, महादर्पकन्दर्पसुभटशस्त्राणि, दुकूलादीनि दिव्यवस्त्राणि,

१. काष्ठनिर्मिता देवमूर्तिः ।

२. भ्रमरी या अम्बरचरी–गगनगामिनी साऽपि दानात्–मदजलात्, मातङ्ग–हस्तिनम् अपि, अञ्चति–गच्छति ।

३. करणानि–इन्द्रियाणि ।

४. पुरस्कृत सारः–घनसारः यस्या सा पुरस्कृतघनसारा सा चासौ तूलिका पुरस्कृतसारघनसारतूलिका, "तूलिका तूलशय्या" (–हैम-अने० का० ३, श्लो० ४९) भाषाया 'तळाई' इति प्रसिद्धम् ।

५. 'उल्लरिका' शब्दस्य व्युत्पत्ति एवंविधा–संस्कृतभाषायाम्–छेदनार्थ' उत्पूर्वकः 'लू'-धातुः (उल्लू) प्रसिद्धः, तस्य तु 'उल्लविका' इति रूपं स्यात्, संस्कृतवत् प्राकृतभाषायाम्–'उल्लू'धातोः समानार्थः 'उल्लूर्'धातु' प्रसिद्धः, ततः कर्तरि 'अक'प्रत्यये स्त्रीलिङ्गे 'उल्लूर्+अक+आ=उल्लूरिका इति सिद्धम् । उल्लरिका–छेदिका इति । द्रष्टव्यं हैम सूत्रम्–८।४।११६।

६. '°गल्लमसूरिका'शब्दोऽपि संस्कृतभाषाया न प्रसिद्धः प्रचलितो वा । यद्यपि 'गल्ल'–शब्दं निर्दिशति आचार्यो हेमचन्द्र "स्याद् गल्लः सृक्कणः परः" (–अभि० चिं० का० ३, श्लो० २४६) । प्राकृतभाषायाम् 'गल्लमसूरिया'शब्दः प्रतीतः शय्यावर्णनप्रसङ्गे व्यापृतश्च । तस्य 'मसूरिया'अंशस्य 'मसूरिका' इति संस्कृत्य अनुकरणम् । 'गल्लमसूरिका'पदेन भाषाया प्रसिद्धस्य 'गल्लमसूरिया' नामकस्य उपधानस्योकरणस्य अत्र ग्रहणम् ।

---

1 स्यात् त्यागात् तदुप्रान्त्यवर्ति सु° कल । 2 'पञ्चसौगन्धिकानि ताम्बूलानि' इति पाठः डे आदर्शे निर्गलितः । 3 'रमूरिका डे । 4 'मदनाङ्गरागमल्लम°' इति पाठो निर्गलितः डे आदर्शे ।

महामोहमहीपतिश्रीकरणानि, विनिवारितविरतिकुमारिकावरणानि[1], शरीरसौन्दर्यभरणानि, विचित्ररत्नसरणानि[2] विविधालङ्करणानि च, समर्पयता पुण्यमिवात्मनस्तेनोन्मूलित कार्पण्य, परमानार्यकार्यमिव[3] प्रतिष्ठितमौदार्यं, अपारसंसारकारस्करप्रकरदोहदमिव[4] प्रकाशित सौहृदं, विकटपापकुटीसंघटनमूल्यमिव निवेदितमात्मानुकूल्यं, दुराचारसारवित्तमिव समर्पित निज-चित्त, कि बहुना ? यदभिमतमतीव कामिनीना, यदिह महार्घतमं देवलोके तदखिलमपि स स्मरकृचित्तः प्रतिदिनमर्पयति स्म भूधवोऽस्यै ।

सा जग्राह समग्रमेव विशदस्वान्ता विनैव ग्रहं[5]
दुष्टेनापि समार्पिपत् स मनसा यद् द्वारपाल्यादिभिः ।
गृह्णात्येव यदृच्छया कुमुदिनी दत्ता श्रियं चन्द्रिका-
द्वारा पश्यत दुग्धमुग्धहृदया दोषाकरेणापि हि ॥९७॥

न कपटघटनामृजुस्वभावा मनसि मनागपि तद्गता विदन्ति ।
कलयति हि गति भुजङ्गमाना[6] जगति भुजङ्गम एव तत्त्ववृत्त्या ॥९८॥

केवल शरदिन्दुकुन्दविशदनिजहृदया अनुमानेनैतदेव विभावयति स्म—

नून मामयमात्मजा कलयति ज्येष्ठो गरिष्ठो गुणै-
र्नो चेदद्भुतवस्तुभिर्जनकवत् पुष्णाति कि सादरः ।
यद्वाऽह निजसोदरप्रियवधूस्तेनाधिक वल्लभा
ज्येष्ठस्यैव विधेयमेतदथवा सर्वं सता वेश्मसु ॥९९॥

अन्येद्युरहिंसायामिव जनतापापहारिकाया[7], सरसकवितायामिव सभानुरागकलितायां,

१. °वरणानि—स्वीकरणानि ।

२. °सरणानि—अत्र 'शरणानि' इति उचितम् । शरण—गृहम् । 'विचित्ररत्नगृहाणि' इत्येव 'विविधालङ्करणानि' इत्यस्य विशेषण सुघटम् । संस्कृतभाषायाम्—'सरण'शब्दः किट्ट-(लोढानो कोट)वाचकः कोशे निर्दिष्टः, परम् अत्र स न घटते ।

३. परमम् अनार्यम् इति 'कार्य'स्य विशेषणम् ।

४. कारस्करः—वृक्षः । "क्षितिरुहः कारस्करो विष्टरः" (—अभि० चिं० का० ४, श्लो० १८०)

५. ग्रहम्—आग्रहम् ।

६ भुजङ्गमाः—विटाः—खलाः, धूर्ताः ।

७. जनतायाः पापस्य हारिकायाम् अथवा जनाना तापस्य अपहारिकायाम् ।

1 °मिवात्मानोन्मू° कल । 2 °म सदैव° डे । 3 समर्प्पयत् क ।

नवयुवत्यामिव [१]रुचिरमारहिताया, साधुसंसदीव [२]सच्चक्रवाक्यजनितानन्दाया, द्यूतकारशक्ता-विव [३]नालीकमुखमुद्राचतुराया, पिशुनसगताविव [४]सदोपधीहिताया सन्ध्याया निजगदे केनापि वैतालिकेन नृपानुरूपं रूपकमिदम्, यदुत—

> इन्दोः कलत्रमनुकूलयितुं त्रियामां
> सन्ध्या दिनेशितुरियं ध्रुवमेव दूती ।
> नो चेद् विलम्ब्य किमुडुप्रकरच्छलेन
> मुक्तास्तनोति [५]वरहारलताकृतेऽस्याः ? ॥१००॥

तदेतदाकर्ण्य चिन्तितमनेन सा तावत्[1] सुधांशुवदना [६]सदनादरपराऽपि, न [७]सदनादरपरा, [८]वदनादरोद्यताऽपि, न मदनादरोद्यता, कथमन्यथाऽस्माकमुपचार उदार हारमिव निर्वि-चारमेव वरतरलाभोपचितचित्त[2]कुतूहला प्रतिपद्येत । न खलु प्रणयपरिचयातिशयमन्तरेण कुरङ्गेक्ष[3]णदक्षिणापि परपुरुषोपचारनामाऽपि सहते किं पुनरियं मुग्धलोचना ? केवलमात्मनो हृदयाभिप्रायप्रकटनमभिमतमपि मनसो वचसो विषयमानेतुमनी[4]श्वरा एव कुलबालिका विरा-जन्ते । न खलु चन्द्रकान्तमणयोऽप्यन्तर्गतममृतं सुधाकरचन्द्रिकाव्यतिकरमन्तरेण क्वचिदपि प्रकाशयन्ति ।

ततो यदि काचिदुदारसारवचनव्यापारचतुरा दुरापपरहृदयविदुरा, यथासमयानुरूप-वि[5]चारचारसूत्रिका संपद्यते दूतिका, तदिदमनायासेनैव दैव[6]मपि निरस्य ममेष्टमचिरादेव सिद्ध्यतीति मदनरेखाविषयतत्त्वचिन्ताचिताचान्तचेतोवृत्तेरविहि[7]तस्वहितसन्ध्यासमयसमुचित-पूज्यसपर्याप्रवृत्ते[९]रनादृतसेवायातसामन्तचक्रस्य सहजानुरक्तभक्तशुद्धशुद्धान्तवधूचक्रस्य —

१. रुचिर —सुन्दरः, मारः—कामः, तदर्थे—हितायै ।

२ सतां चक्र—सच्चक्रम्, तस्य वाक्यं सच्चक्रवाक्यं, सच्चक्रवाक्येन जनितः आनन्दः यस्या तस्या सच्चक्रवाक्यजनितानन्दाया साधुससदि । साधुः—सज्जनः ।

३. नालीक—द्यूतक्रीडाया. उपकरणम् ।

४. दोपसहितायाः धियः हितायाम् ।

५. वरहारलतानिमित्तम् ।

६. सदन—गृहम्, तदादरपरा अर्थात् स्वगृहम् एव निवासादरपरा न वहिः आगच्छति ।

७. सन्—विद्यमानः शुभो वा यः अनादरः तस्मिन् न, परा—परायणा, अर्थात् न आदरपरा— मम अनादर न करोति ।

८. वदनेन वचनेन आदरोद्यता ।

९. अनादृतं सेवायाम् आयात सामन्तचक्र येन तस्य—सेवाप्राप्तसामन्तचक्रविषये अनादर-कारकस्य ।

1 °वदुत्सुक सुव° डे । 2 °चित्तवृत्तिकु° डे । 3 °क्षणा दक्षेणा° डे । 4 °नीशा एव डे । 5 °विचारस्° कल । 6 'दैवमपि' इति पद डे आदर्शे नास्ति । 7 °हितहित कल ।

या लावण्यपदं समुद्रतनया या गीर्गुणै. शारदा
या. प्रीत्या रतयोऽपि या. किल सुधा बिम्बाधरास्वादत. ।
सन्तापप्रशमेन यास्त्रिपथगा याः सर्वदाऽऽमोदतो[1]
मञ्जर्य. सुरपादपस्य वनितास्ताः तस्य हालाहलम्[1] ॥१०१॥

इति ईर्ष्ययेव निशीथेऽपि निद्राया क्षणमपि लोचनगोचरमनापतन्त्यामेव विभात विभावर्या। तदङ्गदाहेनेव मकरकेतनान्मकराकरादुल्लसितमहिमकरमण्डलेन, तन्मनोरणरणकेनेव सर्वतोऽपि प्रज्वलितमर्कोपलपटलेन तदाननेनेव सकुचित कुमुदकाननेन। तल्लोचनै[3]-निमीलिकयेव मिलित रथाङ्गयुगलिकया, तन्मनोरथैरिव प्रधावितमाकुलाकुलै. काकोलकुलैः[2]।

इतश्च परमोन्निद्रतादिविशिष्टचेष्टास्पष्टितविदितहृदर्या[4]कूतया कयाचित् शय्यापालिकया रहसीति स राजा विज्ञपयाचक्रे। तद्यथा—

दुर्घटमपि घटयति सुघटघटनवद् वि[5]कटकपटघटनाभि. ।
विघटयति सुघटमपि कूटघटि[6]तैवद् दैवमिव दूती ॥१०२॥

ततो यदि देवस्य रहस्यमप्रकाश्यमस्ति तत. सपादयामि तत्साधनसमर्थबुद्धिधनसपन्नां तामहम्। तदाकर्ण्य तदभिप्रायपरिज्ञानचमत्कृतचेतसा निगदितमनेन, अहो ते बुद्धिकौशल, अहो! ते स्वामिकार्यच्छल, अहो! ते साहाय्यबल, तदविलम्बमेव समर्थय निजमन्त्रितमिदम्, येन निजाभिमतसिद्धिमिव भवती तामपि कृतार्थया[7]मीति। तया पुनस्तदानीमेव समानीय संचारिणीव चार्वाकविद्या, हिंसेव प्रकटितबहुधाऽवद्या, समस्तदुर्नयगोकुलव्रजिका रहसि सपादि[8]तैका परिव्राजिका निवेशिता च, यथोचितस्थाने। लभस्व निजाभिमतमिति दत्ताशीर्वादा च प्रक(?ज)[9]ल्पितु प्रवृत्ता, तद्यथा—

कृ[3]त्याकृत्यनिरूपणाय चतुरैश्चित्रा व्यवस्थाः कृताः
शास्त्रेषु प्रथितानि तानि शतशो भिन्नान्यभिप्रायतः।

१. यः सुगन्धः वहु दूर प्रसरणशीलः स आमोद' ।

२. काकोल'—वृद्धकाकः। "वनाश्रयश्च काकोलः" (—अभि० चिं० का० ४, श्लो० ३८९)

३. [ व्यवस्थावर्णादिविभागेन आचारस्थापनाराजोपरिकाऽमात्याङ्गरक्षकादिका, तानि कृत्याकृत्यानि। अभिप्रायतो दर्शनिना भिन्नानि—नानारूपाणि अहिसादीनि तेपा स्थापकः तर्कः—प्रमाणशास्त्रम् अप्रतिष्ठ' सामर्थ्यस्याप्यानैकान्तिकः। तत्त्वस्य कृत्याकृत्यादिपरमार्थस्य तत् तस्मात् तत् तत्त्वं यत् स्वस्येष्ट तदेव।]

1 हालाहलः डे। 2 अत एवेर्ष्य° कल। 3 °नयमलि° कल। 4 °याकूल्या क। 5 °विघटक° कल। 6 °तमिव दैववद्दूती डे। 7 °यामि। तया ल। 8 डे आदर्शे ६, ७, ८, अङ्कितपत्राणा नष्टत्वात् केवल क आदर्शस्यैवाय पाठः। 9 प्रगल्पितु ल।

तेषा विप्रतिपत्तयोऽपरिमितास्तर्कोऽप्रतिष्ठो यत–
स्तत्त्[त्त्]त्वकथा[1] वृथा तदथवा स्वस्मै यदिष्ट नृणाम् ॥१०३॥

स्वर्गापवर्गयोर्वार्त्ता[1] वार्तैव परमार्थतः ।
ताभ्यां न कश्चिदायातो दृश्यते श्रूयते न च ॥१०४॥

धर्मो वा यदि वा मोक्षः कल्पना धूर्तवृत्तये[2] ।
काम एव पर तत्त्व तदर्थोऽर्थोऽपि नापरम् ॥१०५॥

साक्षादनुभवेनापि कामार्थौ सुपरिस्फुटौ ।
तौ न स्तो धर्म-मोक्षौ स्तो य आहुस्ते स्युरास्तिकाः ॥१०६॥

अस्माक दीयता स्वर्गो मोक्षो वा वो भविप्यति ।
इत्याख्यायास्तिकंमन्यैः श्रद्धालुर्भक्ष्यते हहा ! ! ॥१०७॥

तत् सत्यं च हित च सारमपि ते वच्मि स्फुटं श्रूयतां
देवः पञ्चशर पर तदनुगाश्चार्वाकदूत्यो गुरुः ।
शब्दाद्या विषयास्तु तत्त्वमथवा तत्कारण योषित–
स्तत्सयोगजसौख्यमेव च शिवं शेषो विचारो वृथा ॥१०८॥

गम्यागम्यविचारणा जडधियामेवाङ्गनागोचरा
सामर्थ्ये सति यैव मानसमुदे यस्येह गम्याऽस्य सा ।
पुण्य नास्ति न चास्ति पातकमपि स्वेच्छाविघातो यतो
मूढरास्तिकनामकैर्यदुदिते स्वेच्छैव तत्त्व तत ॥१०९॥

राजा पुनरिदमाकर्ण्य जातचमत्कारो बभूव ।

उचितमनुचित[3] वा तत्त्वमिष्ट तदेव
स्वहृदि यदिह तोष पोषयत्यङ्गभाजाम् ।
कुमुदवनममन्द येन दोषाकरेऽपि
प्रथयति परितोषं नैव मित्रोदयेऽपि[4] ॥११०॥

अहो ! निरस्तसमस्तमतान्तराभिप्रायसारस्तव तत्त्वविचारः प्रतिष्ठितमकरकेतुविलासः सकलोऽपि युक्तिविन्यास. सहृदयहृदयाभिप्रायाभरणशरणं सर्वमुपन्यासकरण, तदेवमनु-

१. [ वार्त्ता वार्तैव न किञ्चिदित्यर्थः । ]
२. धूर्तवृत्तये धूर्ताना वर्तनाय, तदर्थः कामार्थैव योऽर्थो धन तदेव तत्त्वं तदपरमन्यन्नेति । ]
३. [ उचितेत्यादिवृत्तेः–दोपाकरो दोपनिधेर्मित्र सुहृत्, अथ च चन्द्रादित्यौ । ]
४. [ शेषं परिव्राजिका वक्तुमारभतेऽत्यन्त स्वयमभ्यूह्यम् । ]

1 °स्तत्त्वक कल ।

मोदमानस्तदेव निजाभिमतमभिधाय प्रदत्तपारितोपिका, परिव्राजिका विससर्ज। साऽपि परितुष्टमानसा—देव ! सिद्धमेवेद तवाभिमतमित्यभिधाना जगाम युवराजधाम।

यथोचितपरिहितधौतपवित्रवस्त्राया सर्वथा प्रतिपिद्धमनो-वाक्-कायशस्त्राया., समयानुरूपनिर्वर्तितवीतरागप्रतिमार्चाया., सह समानधार्मिकसध्रीचीजनेन प्रस्तुतप्रवचनचर्चायास्तस्या मदनरेखाया निवेद्य तदाज्ञयैव प्रतीहारिकया प्रवेशिता निवेशिता चानुरूपस्थाने। सा परिव्राजिका वक्तुमारभत—

दोपोपशान्तये बुद्धि स्वामिनीकृत्य तत्परा।
द्विधा पत्याऽन्विता नन्द्यात् स्वामिनी कृत्यतत्परा ॥१११॥
घनसाराऽगुर्वामोदसुभगमक्षतविशुद्धिरमणीयम्।
कुसुमेपु-भ्रमरहित जिनार्चन जितमनोऽस्तु मुदे ॥११२॥

किमद्य निरवद्यसारपूजोपचारनिमित्तम् ? इत्यभिधाय विरताया तस्या मदनरेखा जगाद—ननु प्रतिवासरमेव निजवपुप इव विभूपया वीतरागस्य शुश्रूपया निजनेपथ्यानामिवाधिवासनया सुगुरूपदेशपर्युपासनया निजाङ्गरागस्येव रचनाप्रकारेण स्वाध्यायसमाचारेण स्वस्येव प्रतिष्ठाभि करणसयमनिष्ठाभि., परिजनस्येव पुरस्कारेण तपोविधानस्य संस्कारेण निजापत्यस्येव लालनेन निर्निदानदानविधिपालनेन त्रिसन्ध्यमप्यवन्ध्यमेवास्माकम्।

यतो गृहवासपाशपरवशान्त.करणानामपि चतुरचेतसा गृहमेधिनामिदमेव पूजादिकर्म्म शिवशर्मणे। तथा चेदमभिधीयते—

यद्देवार्चनमुज्ज्वलेन मनसा यत्सद्गुरूपासन
　यत्स्वाध्यायकथा निरस्तविकथा श्रद्धाऽपि यत्सयमे।
यच्छक्त्या तपसो विधि सुविधिना यद्दानलीलायित
　षट्कर्मैदमुदाहरन्ति गृहिणा दुष्कर्मनिर्मूलनम् ॥११३॥

१. [ दोपोपेत्याद्यार्या—दोपोपशान्ताय रजनीक्षयाय दोपक्षयाय वा स्वा निजा बुद्धि इनीकृत्य आदित्यीकृत्य तत्परा बुद्धिप्रधाना। उत्तरार्धे—कृत्यतत्परा करणीयनिष्ठा स्वामिनी मदनरेखा नन्द्यात्। अपत्येन अन्विता युक्ता, पत्या भर्त्रा च अन्विता—युक्ता सतीति द्विधापत्यान्विता। अथ च द्विधा युगवाहु-मणिरथाभ्या पतिभ्यामिति कौटिल्याद् द्विधापत्यान्वितेत्युक्तम्। ]

स्वाम् इनीकृत्य स्वा बुद्धिम् इनीकृत्य—ईशीकृत्य—स्वामिरूपा कृत्वा अर्थात् स्वा बुद्धि प्रधाना कृत्वा। द्विधापत्याऽन्विता द्विप्रकारेण पत्या अन्विता—अत्र 'पति' शब्देन एकः पतिरूपोऽर्थः वोध्यः, अन्यः जिनपतिरूपोऽर्थः वोध्य., अर्थात् पतिः—देहपतिः, जिनपतिः—आत्मपतिः अथवा धर्मपतिः।

२ कुसुमेपु भ्रमरहित, पुष्पेपु भ्रमराणा हितरूपम्। अथवा कुसुमेषुभ्रमरहितम् इत्येवम् अखण्ड पदम्, ततः कामदेवभ्रमरहितम्—कामदेवभ्रान्तिवर्जितम्।

1 °जने प्रस्तुत° ल।

ततो जगदे जगदेकविप्रतारणरसिकया परिव्राजिकया—कल्याणिनि ! परलोकसुखसाधनाय तावदैहिकसुखसाधनानि, गीत-शीताम्बु-ताम्बूल-घनसार-सुरतादीनि निजकरणाभिमतानि विमुच्यन्ते तत् पुनरज्ञानमेव पिशुनयति[1] । को हि नाम हृदयालुः करतलकलिता सरसरसवतीमपास्य कूर्परमास्वादयति[2] ? परलोको[1]ऽपि कोऽपि लोकवार्तैव[3] न परमार्थतः, परलोकिनः सर्वथाप्यभावात् । अथ चेतनानुपपत्त्या तस्य सद्भावः सभाव्यते, तन्न; तस्याः[4] पृथिव्यादिधर्मत्वात् । अन्यधर्मस्य चान्यस्य गमकत्वे अतिप्रसङ्गात् । न च पृथिव्यादे[2]रेकैकस्य चेतनाऽनुपलम्भात् तत्समुदायस्यापि तदभावः । गुडादेरेकैकस्य मदशक्तेरभावे[3]ऽपि तत्समुदायस्य मदशक्तिदर्शनात्[4] । अथ पृथिव्याद्यात्मक शरीरमेवात्मा तस्य च परलोकगमन नास्ति । अत एव परलोकिकस्य फलस्य धर्म्मकर्मणो निर्माणमात्मानमेव वञ्चयति । तेन विषयोपभोगसौख्यमेव देवतेव सततमेवाऽऽसेवनीय किमपरपरिकल्पनाभिः ? । धर्मप्रतिपक्षस्य अधर्मस्यापि दुर्गतिहेतोः सकलसुखप्रत्यूहनिदानस्य मनागपि न शङ्कनीय, किं वन्ध्यासुतादपि कोऽपि बिभेति ? यदिदमुपलशकलमेकमारोप्य सिहासने स्नपनाङ्गरागकुसुमाभरणवरवसनादिभिरभ्यर्च्यते, द्वितीयं पुनरमेध्यमूत्र-पुरीषाध.करणादिभिस्तिरस्क्रियते, तत् किमनयोरपि धर्माधर्मफलमेव तत् न चोत्पादादयो धर्माधर्मपूर्वका इत्यपि मन्तव्यम् । जलबुद्बुदादीना तत्सभवेऽपि धर्माधर्मपूर्वकत्वा[5]योगात् । तदित्थम् आत्माऽपि न शङ्कनीय., कैषा वराकी परलोकशङ्का ? तयोरभावे कतमः स धर्मः ? तत् पातक वा मृगतृष्णिकेव ।

ततो यावदियं देहे गेहे श्रीरिव चेतना ।
[6]श्रेयसी तावदेकैव यदृच्छाचारिता नृणाम् ॥११४॥
अनुभव विषयोपभोगलक्ष्मी त्यज परलोकभयं तु सर्वथाऽपि ।
कतिपयदिवसे हि जीवितव्ये निजमनसः क्रियते कथ नु कष्टम् ॥११५॥

तदेतदाकर्ण्य सकर्णविज्ञानया विदधे मदनरेखया—वराकिके ! स्वयनष्टेन परानपि नाशयता दुराचारेण केनापि विप्रतारिताऽसि, मुग्धे । वर्त्तमानहिकसुखपरित्यागो नवोद्भाविनः

१ पिशुनयति—सूचयति ।
२. कूर्पर—कफोणिम्, भाषायाम् 'कोणी'।
३. वार्तायं एव । वार्त्तम्—निस्सारम् । यत् शाश्वतः—"निस्साराऽरोग्ययोः वार्त्तम्" (—हैमलिङ्गा० पृ० ९८, प० १२, श्लो० १८ वृ०)
४. चेतनायाः ।

1 परलोकोऽपि वार्त्तायैव क । 2 तदनुभावः क । 3 मदनशक्तेः क । 4 मदनशक्ति° क । 5 °त्वयोगात् ल । 6 श्रियसी क ।

पारलौकिकस्य महीयसः सुखातिशयस्य हेतुता प्रतिपद्यते तत् कथमधुना विधिनोप्तमाम्रादि-बीजं, सहस्रगुणतयेहापि भाविकालान्तरे स्फातीभवद् वीक्ष्यते ? हस्त-कूर्पाख्यानमपि मुग्धवञ्चनमात्रमेव न कमप्यर्थं पुष्णाति । किं गृहतो निष्कास्य सत्क्षेत्रे निक्षिप्तं वस्तु स्वयमेव नासाद्यते ? प्राणादिमति स्वशरीरे चात्मनि सिद्धे परशरीरेऽपि सिद्ध एव प्राणादि-मत्त्वाविशेषात् । यथा च तारुण्यमृते न वार्धकम्, तारुण्यमपि न शैशवेन विना, तथा शैशवमपि न पूर्वभवमन्तरेण । यतः पूर्वभवचैतन्यानुवृत्त्यैव तत्कालजातस्य अशिक्षितस्यापि स्तनन्धयस्य स्तन्याभिलाष । ततः परलोक-परलोकिनो सिद्धिरिति । भूतेभ्यश्चेतना स्व-कपोलशिल्पिककल्पितमेव तेषामचेतनत्वात्, न चाचेतनेभ्योऽपि चेतनोत्पत्तिराशङ्कनीया, कारणानुरूपत्वात् कार्यस्य । अथोदकान्मुक्ताफलविलोकनात् कार्यानुरूपकारणवादो व्यभिचारीति न सगतमिदं, उदक-मौक्तिकयोरपि चेतनत्व-पौद्गलिकत्वस्य समानत्वात् । मदशक्तिरपि यद्यचेतना गुडादिभ्य अचेतनेभ्यो जायते तत् कथमचेतनेभ्य पृथिव्यादिभ्य-श्चैतन्यमिति सर्वथा किमपि नानुरूपम् ।

देहात्मनोरपि नैकत्वं, सत्यपि देहे कदाचित् चैतन्यानुपलम्भात् । यदि वा अनयो-रेकत्व स्यात् तदा भानु-वासरयोरिवैकापायेऽन्यतरस्याप्यपाय स्यात् । उपलशकलोपन्यासोऽपि मुखरतामात्रफलतया सर्वथा वृथैव । सुख-दु खयोरेव धर्माधर्मफलतयाऽभिमतत्वात् । [1]ते च तयोरुपलशकलयोर्न स्त एव । तदखिलमपि प्रलापमात्रमेव तवोदितमिति ।

अथवमभिदधीथा. भवतु नामायमात्मा परलोकादयो वा न पुनरपवर्गोऽपि तस्य षष्ठभूतवदप्रामाणिकत्वात्, तदपि न वक्तव्यम्, यथैव दु:ख-दौर्भाग्याऽऽधि-व्याधि-शीतान्ध-कारनिशादीनामुपाये सति प्रतिद्वन्द्विन. सुखादय. सकलबाल-गोपालाङ्गनादीनामपि प्रतीतास्तथा ससारस्य प्रतिद्वन्द्विनाऽपवर्गेणापि भवितव्यमेव । उपाया अपि ज्ञानादयो विवेकिना सुप्रतीता एव । तस्मान्मोक्षे एव तदर्थं धर्मे वा यतितव्यम् । न पुनः कामे तदर्थेऽर्थे वा । परमार्थतो दु.खरूपत्वात् कामस्य ।

कलयति विषयानपीह सौख्यं [2]रतिपतिरुद्धविशुद्धतत्त्वदृष्टि ।
कवलित[3]कनको यतः सुवर्ण ध्रुवमवगच्छति मिष्टलेष्टुकादि ॥११६॥

१. ते च सुख-दुःखे ।

२. रतिपतिना कामेन रुद्धा विशुद्धा दृष्टिर्यस्य स· ।

३ कनकः—धत्तूरक', "कनको नागकेसरे धत्तूरे" (—हैम० अने० का० ३, श्लो० १३)

यदि हृदि भवरोगाद् विद्यते त्रासलेशो
विषयसुखमपथ्यं त्यज्यतामात्मनीनैः[1] ।
तदखिलमपि हातु यद्यहो! नास्ति शक्ति-
स्त्यजत तदपि तावत् तद्गत स्नेहयोगम् ॥११७॥

प्रारम्भे विषया विषाश्च[2] मधुरा· प्रान्ते पुनर्दारुणा
न क्वापि प्रतिबन्धमेषु कुरुते विज्ञो जडा· कुर्वते ।
एतेषा प्रतिन्बधतोऽपि भवतस्तौ मृत्यु-बन्धौ यतो
नष्टा दीपशिखामवाप्य शलभा बद्धाः कफान्मक्षिकाः ॥११८॥

न चैतदपि महानुभाविकया निजचेतसि चिन्तनीयम् ।
यदि विपया अपि न सुख सुखिनो नैते च विषयसुखरसिकाः ।
सुख-सुखिवार्त्तागर्त्तामग्ना भग्नाऽथवा चान्ये ॥११९॥

यतः—

सन्तोषः परम सुखं न विपया ज्ञानं च तत्साधनं
नाज्ञान सुखिनोऽपि तद्द्वयरता नाज्ञा न लौल्यान्विताः ।
सन्तुष्टः सकलज्ञ इन्द्रमहित· सद्भूतवादी च य-
स्तस्यानुग्रहतस्तदेतदखिल शुद्धात्मना सिद्ध्यति ॥१२०॥

अहो ! जिनप्रवचनविषय स्थैर्यम्, अहो ! प्रभावनाविषय प्रागल्भ्यम्, अहो ! भक्ति-विषया व्यक्ति·, अहो ! कौशले तत्परत्वम्, अहो ! तीर्थसेवाया हेवाकः इत्यभिदधानया दुर्नयकर्णिकाकमलायमानया सानन्द स्मेरवदनयेव व्याहृतमनया—सुचारुचरिते ! सकलामल-गुणग्रामाभिरामा[2] सकलैरपि बालकै प्रतिपदं गीयसे, तथा मम परीक्षाकषपट्टिकायामपि निर्व्यूढा दृश्यसे । किञ्च, मधुमत्तकोकिलकूजितादपि मधुरिमधुरया महासैद्धान्तिकनिरूपित-रहस्यादपि सूक्ष्मार्थया निजमध्यादपि स्तोकया, नाटकप्रविष्टपात्रादपि प्रस्तुतार्थान्[3] उत्तीर्णया समुद्रादपि दु·खगाहमध्यया निजहृदयादपि प्रसन्नया, सहस्रकरोदयादपि निर्मूलितदोषया, तवानया देशनया प्रबलपवनमालयेव कादम्बिनी निरवशेषाऽपि निर्मथिता मदीया हृदय-विप्रतिपत्ति·, आविष्कृत· प्रबोधाभिधो भगवांस्तरणि ।

१. आत्मने हितम् आत्मनीनम् । आत्मनीनैः—आत्महितकरैः ।
२. विषः—गरलवाचकः, विषशब्दः पुल्लिङ्गेऽपि ।
३ प्रस्तुतचर्चाविषयकान् अर्थान् प्रति उत्तीर्णया वादेन अपराजितया ।

1 नान्या न क । 2 °रामाय स° क ।

केवलं कथमपि यदि युवराजावस्थैव [1]संनिहितविचित्रमन्त्रितनया [2]भविष्यद्बहुक्षमा च दूरपरिच्छदा च भवति भवती तदा किञ्चित् पुनराख्यामीत्यभिधाय तदनुज्ञया दूरीभूरीभूते परिजने पुनरुवाच—

प्रज्ञावज्ञातसमस्तकोविदे ! यद्यपि माधव इव धर्म्म एव जगतोऽपि ज्येष्ठस्तथापि बलभद्र इव ततोऽपि न्याय एव गरीयांस्तत्पूर्वकत्वात् तस्य, न्यायमवलम्बमानो हि यानपात्ररूढ इव नापवादमहार्णवे निमज्जति ।

तथाहि—[3]विषमेषु सुभटसकटगतो भगवानीश्वरोऽपि हिता नीतिवीथिकामवलम्बमानो दुर्गैकनितम्बेऽभिनिविष्टदृष्टिरजायत । दक्षाध्वरविरूपचित्तैरनवद्यविद्यैः सोऽपि न यज्ञोपक्रमेषु बहु मन्यते स्म । न हि तनयाङ्गसङ्गमेऽपि प्रजापतिर्[4]जायते अत्र पापशब्दभाजनं, पुरन्दरो निर्मूलोन्मूलि[1]ताऽहल्या[5]शीलवल्ल्यावलिकोऽपि सर्वाङ्गे सगतनयनतामरसभाधिक धाम जगाम । ततो गलितपौरुषोऽपि विदलितविमलाचारोऽपि सततमवगम्य गमनप्रवृत्तोऽपि प्रभुः प्रभुरेव, नातिक्रमणीयशासनो भवति किन्तु रमणीयशासन एव । तत समाकर्णय प्रश्नोत्तरमेकम्, अवधेहि हृदय विधेहि निर्णयमिति । तद्यथा—

[6]पीयूषांशुमुखी प्रसूनविशिखोल्लेखा च पृच्छत्यद.
स्वेष्ट क. कुरुते हठादपि ङसा युष्मत्पद कीदृशम् ? ।

१. संनिहितः विचित्रः मन्त्रितो नयः अनया, ईदृशी मदनरेखा ।

२ भविष्यन्ती बह्वी क्षमा यस्याः सा भविष्यद्बहुक्षमा—विशेषक्षमायुक्ता ।

३. [ विषमेषु—आपदादिषु सुभटसकटगतो भगवान् समर्थो धनी कामपि अद्भुता नीतिवीथिका—न्यायमार्गम् अवलम्बमानो दुर्गस्य—पर्वतादेरेकोऽद्वितीयो नितम्बकूटादिसूत्राभिनिविष्टदृष्टिः—साग्रहबुद्धिरजायत । दक्षाणा—कुशलानाम्, अध्वनि—मार्गे, रविरूपचित्तैः—उद्द्योतकारिमनोभिः, अनवद्यविद्यै.—निष्पापशास्त्रज्ञै', सोऽपि—पूर्वोक्तविशेषणेन विशिष्टोऽपि, नय जानन्तीति नयज्ञास्तेषूपक्रमेषु बहु मन्यते स्म । अथ च—विषमेषु —कामस्तद्रूप सुभट' तत्सकटगतोऽपि ईश्वरो रुद्धकामोऽपि, हिता—कामलुप्ता, नीतिवीथिकामवलम्बमानो दुर्गायाः—गौर्याः, नितम्बे—आरोहे, अभि—आभिमुख्येन निविष्टदृष्टिरजायत । दक्षाध्वरे—दक्षनाम्नः ऋषेर्यज्ञे विरूपं चित्—चेतना यस्य स ईश्वरस्तैरवद्यविद्यैर्याज्ञिकैरित्यर्थः । यज्ञोपक्रमेषु—यज्ञारम्भेषु न बहु मन्यते स्म । ]

४. अत्र 'जायतेऽत्र' इति अकारप्रश्लेषो न कल्प्येत तदापि 'त्रपापशब्दभाजनम्' इत्यपि अर्थ' सुगमः सुस्पष्टश्च ।

५ शीलस्य वल्लिः—अहल्यायाः शीलवल्लिः. अहल्याशीलवल्लिः, तासाम् आवलिः, अहल्याशीलवल्ल्यावलि', निर्मूलम् उन्मूलिता, अहल्याशीलवल्ल्यावलिक. तादृशोऽपि पुरन्दरः ।

६ [ पीयूषांशुमुखी—चन्द्रमुखी, प्रसूनविशिख'—मदन., लेखा—रेखा च इति त्रय पृच्छति—अनुयुङ्क्ते। पृच्छका हि उत्तरमध्ये सर्व बोधनीयाः। यथा—चन्द्रमुखि !, मदनरेखे ! शेषं स्पष्टम् । ]

1 °रोन्मूलि° क ।

किं नेच्छन्ति मुमुक्षवोऽभिकलित. कीदृक् तिवन्तो लपी

प्रज्ञातोऽसि सरस्वती तदधुनैवार्यापरार्द्धाद् वद ॥१२१॥

तदाकर्ण्य चिन्तयामास युवराजप्राणेश्वरी ।

चन्द्रमुखि ! मदनरेखे ! राजा तव सङ्गममभिलपति ।

अये ! किमिदमसमञ्जस कपटनाटकमस्याः पापीयस्याः । भवतु वा मा, कदाचित् पूर्वमिव शीलरक्षायामपि परीक्षाकक्षा करिष्यतीति चिन्तयन्ती यावदास्ते तावत् तया प्राभृतीकृत्य समर्पितो हारः ।

मदनरेखाया तु करतललग्न खादिराङ्गरमिव त तिरस्कृतवत्या पुनरुवाच—

कुचेष्टालङ्कारस्तरलहृदयोऽनिह्नुतगुण—

स्तथा नाभिप्रेतस्थितिरभिमतच्छिद्रघटनः ।

१. अस्मिन् श्लोके प्रश्नोत्तररूपयुक्त्यन्तरेण राज्ञः अभिप्रायः परिव्राजिकया सूचितः—

प्र०—स्वेष्ट कः कुरुते हठादपि ?

उ०—राजा ।

प्र०—ङसा विभक्त्या युष्मत्शब्दस्य कीदृग रूपम् इति, अर्थाद् ङसा युष्मत्पद कीदृशम् ?

उ०—तव ।

प्र०—किं नेच्छन्ति मुमुक्षवः ?

उ०—सङ्गमम् ।

प्र०—'अभि' कलितः—'अभि' उपसर्गयुक्तः 'लपी' धातुः तिवन्तः—'ति' (तृतीयपुरुषैकवचने) कीदृग रूप भवति ?

उ०—अभिलपति ।

समग्रवाक्यमेवम्—राजा तव सगमम् अभिलपति ।

प्रज्ञात.—बुद्धितः—बुद्धिवैभवापेक्षया त्व सरस्वती असि । आर्यापरार्धात्—आर्याछन्दसः अन्यस्मात्, अर्थाद् उत्तरम् अधुनैव वद ।

२. [कुचेष्टे इत्यादिवृत्तम्, न—नैव, रमणीगणेन—स्त्रीवृन्देन हारः परित्याज्यः। कुचयोः—स्तनयोः, इष्टः—अभिमत., अलङ्कारः—भूषण, तरलः, मध्यमणिहृदये—नारिहृदि यस्य हारस्य स तथा । अनिह्नुत'—स्वच्छतया अलुप्तो गुणो दवरको येन स तथा । नाभौ प्रकर्षेण इता—गता—प्राप्ता, स्थितिः—अवस्थान येन स तथा । अभिमता—अभिप्रेता, छिद्रस्य—वेधस्य घटना यस्य स तथा, अत एव कथ तस्य वन्धनविधिः—परिधानाचारोऽनुचितः—अयुक्तः । तस्य परिधानं युक्तमेवेत्यर्थः । न रमणीगणेन पुरुपरत्नवृन्देन पिशुनः परित्याज्यः । कुत्सिता चेष्टाऽलंकारो यस्य स तथा । तरल—चञ्चल हृदय यस्य सः । निह्नुतः—अपलपितः गुणः परकृतोपकारादिर्येन स' । न—नैव, अभिप्रेता स्थिति'—अवस्थान यस्य सः । पिशुनस्यानेकधाऽवस्थान नान्येषा—मस्तीत्यर्थः। तथाऽभिमता छिद्रघटना परदोषग्रहणसवन्धो यस्य सः । अत एवास्य कथ वन्धन—विधिरनुचितः । पिशुनो वधनिग्रहणाय इत्यर्थः । ]

परित्याज्यो हारः पिशुन इव दूरे न रमणी–
गणेनास्यावश्य कथमनुचितो बन्धनविधिः ?[१] ॥१२२॥

नीतिकौशलशालिनि ! राजमार्गोऽय यदात्मरुचितमेव क्रियते । कुलक्रमोऽय यत्सामोपायेनैव भवतीमभिमुखयति । आस्तिकप्रकारोऽय यत् सर्वथा समर्थोऽपि नारभते बलात्कारम् । मत्तमातङ्गगामिनि ! कोप मा कृथा., सत्य वक्ष्यामि । देवतार्चनादिनाऽत्युग्रपुण्यजनकेन कर्मषट्केनापि जन्मनीहैव फलित भवत्या., यदय वसुधावासवस्त्वदेकशरणः संवृतः ।

[२]अद्भुतरुचिरमणीगणविभूषणा त्वमसि मूर्तिरपि तस्य ।
सुरसदृश. सुरसदृश. भवत्याः सर्वथा योग्यः ॥१२३॥
[३]अल मे रूपमानेन कल्याणाङ्गे सति त्वयि ।
यमुक्त्वेव स्मरस्तेन सहाभूद् दृष्ट्यगोचरः ॥१२४॥
[४]अनेन सयोगमनङ्गरागिणी
भजस्व चेदिच्छसि त महोदयम् ।

१. अस्मिन् श्लोके शब्दयोजनाचमत्कारेण हारस्य प्रशसा तथा गर्हा व्यज्यते-परिव्राजिकादृष्ट्या प्रशसा, मदनरेखादृष्ट्या गर्हा–परि०पक्षे कुचेष्टालंकार.–कुचानाम् इष्टरूपः अलकारः । मद० पक्षे कुचेष्टायाः अलकारः । परि०पक्षे नाभिप्रेतस्थितिः–नाभिपर्यन्त प्रेता–प्राप्ता स्थितिर्यस्य सः । मद०पक्षे न अभिप्रेता स्थितिः यस्य सः ।

२. [ हे मदनरेखे ! अद्भुतो रुचिरो मणीगणो विभूषण यस्याः सा तथा, त्व तस्य मणिरथस्य मूर्ति· । किंभूता ? अद्भुतरुचिः–अद्भुतानुरागो रमणीगणो नायिकावृन्द यस्या सा तथा, रमणीवल्लभेत्यर्थः । व्याख्यापयति येन च–तत्र रुचिः–दीप्तिः अत एव स मणिरथः सुरैर्देवैः सदृशः–तुल्य । भवत्या सुरसदृश·–शोभनानुरागलोचनायाः सर्वथा वल्लभेन योग्यः । य मणिरथम् उक्त्वा स्मरः–कामस्तेन मेरुणा सहादृशोऽभूदित्यर्थः । ]

सुरः–देवः, तत्सदृशः स राजा, सुरसा–शोभनरसा दृग्–दृष्टिः यस्याः सा सुरसदृक् तस्याः सुरसदृशः ।

३. [ किमुक्त्वेत्याह–कल्याणाङ्गे–श्रेयोऽङ्गे त्वयि सति अल–पर्याप्त, मे–मम, रूपमानेन–रूपाहंकारेण, तथाऽलं–पर्याप्तम् अङ्ग यस्य तस्मिन् त्वयि सतीति । ]

त्वयि कल्याणाङ्गे–निरामयाङ्गे सति, मे–मम, रूपमानेन अलम् इति यम्–य प्रति उक्त्वा इव स्मरः तेनैव सह दृष्ट्यगोचरः–अदर्शनः अभूत् अर्थात् तस्मिन् राज्ञि स्मरस्य समावेशो जातः–राजा स्मराभिन्नः सवृत्तः ।

४. [ कश्चित् श्रोष्यतीति मोक्षोपायप्रकटनवाह्यार्थे मणिरथसंयोगमुपदिशति–अनेन मणिरथेन सह योग–सभोगम्, अनङ्गरागिणी–कामासक्ता सती भजस्व चेत् महोदय–महादेवीपदोच्छ्रायमिच्छति। तस्माद् भो मदनरेखे ! गोपः–नृपस्तस्य भोगेन संगमेनाभिनन्दिता श्लाघिता भव–सवर्धस्व ।

नियोज्यते सत्यपि यद्विचक्षणै-
भोगोपभोगेन भवाभिनन्दिता ॥१२५॥

अपि च,

त्वामेकामभिवाञ्छति प्रतिपदं ध्यायत्यसौ त्वां गुणैः
श्रद्धत्ते तव सङ्गमं लिखति च त्वां दर्शनोत्कण्ठया ।
धत्ते विक्लवतां विना च भवतीं त्वां वर्णयन् निस्त्रप-
स्त्वामप्राप्य भृशं प्रमाद्यति ततो वक्तीत्थमुन्मत्तधीः ॥१२६॥

साक्षादेकः कलङ्कस्तव तुहिनरुचे ! तावदस्त्येव तस्या
वक्त्रस्पर्धाऽनुबन्धात् किमपरमधुना वाञ्छसि स्वल्पबुद्धे ! ।
गङ्गातीरेऽन्यथा किं शिरसि पुररिपोस्तप्यमानस्तपस्त्वं
जातोऽसि क्षीणमूर्तिः कथय कथय तत् किं कलाकौशलं ते ॥१२७॥

त्वद्भावभावितान्तःकरणः शरणं प्रपद्यमानस्त्वाम् ।
पुरतोऽनुवर्तयन्निव कुपितां प्रलपति सदैवेत्थम् ॥१२८॥

अनुग्रहरसं गतः सुतनुदर्पकोपक्षय-
स्तवायमहितो हतो बहुविधैरतिप्रार्थनैः ।
अनुग्रहरसंगतः सुतनु ! दर्पकोपक्षय-
स्तवायमहितो हतो बहुविधैरतिप्रार्थनैः ॥१२९॥

यत्—यस्माद् विचक्षणैः—बुद्धिमद्भिः सत्यपि सुशीलाऽपि नृपोपभोगेन सह योज्यते—सवध्यते । सुशीलत्वाद्धि नृपसंगमो दुर्लभः । अथ मदनरेखायाः प्रकटनीयोऽर्थः । अन्यस्त्वयं अनेन सभिप्राय(?) योगं मोक्षोपायं भजस्व । किंभूता ? अङ्गे—शरीरे, रागो विद्यते यस्याः सा अङ्गरागिणी नाङ्गरागिणी—शरीरनिरपेक्षा सतीव प्रसिद्धम् । महोदयं—मोक्षम् इच्छसि, यद् यस्माद् भोगोपभोगे सत्यपि भवाभिनन्दिता—संसारबहुमानित्वं विचक्षणैर्न नियोज्यते नाद्रियते । ]

१. [ सुतनोः—शोभनशरीरस्य, दर्पकस्य—कामस्य, हरकृत उपक्षयः—दाहरूपः । बहुविधैः—अनेकप्रकारैः अतिप्रार्थनैः—कामभार्यायाचनैः हतः—गतः । पुनः कामो जीवित इत्यर्थः । कुतः सकाशात् ? अनुग्रः—अक्रोध , हरः—महादेवः, तस्य संगतः—संगमात् गौरीवीवाहे रतितोषाय महेश्वरेण कामः पुनर्जन्म लम्भितः, अत एवासौ स्तवाय स्तुतिनिमित्तं यथा लोकः श्लाघां करोति तथा महितः—पूजितः जनैरित्यध्याहारः. इति पूर्वार्धं व्याख्यातम् । हे सुतनु ! मदनरेखे ! अत इतः पूर्वार्धे कामस्य पुनर्जीवनात् तवात्र दर्पस्य—मानस्य, कोपस्य—क्रोधस्य, क्षयः—विनाशः, दोषमानपरिहारः अनुग्रहरसं—प्रसादसंगं गतः—प्राप्तः । कैः कृत्वा ? अभिप्रार्थनैर्याञ्चातिरेकैः । किंभूतैः ? बहुविधैः । सोऽपि दर्पकोपक्षयो हतः—निवृत्तः सन् अहितः—नानुकूलोऽस्माकमिति गम्यते । तत्क्षयेन—हननेन मान-क्रोधयोः पुनः सद्भावात् स कनिष्ठो मम । ]

इदानी पुनरतिक्रम्य नवापि कामावस्थाः दशमीमपि समारूढप्रायो वर्तते । तया चास्ताचलचूलिकया दिनपताविव कलिते तत्र भूपतौ सदाऽऽलोकपथबहिर्भूतैरसद्वृत्ताभिमतैरपलपितसाधुमार्गैरुत्थापितखलोलूकपटलैर्दोषोदयलब्धप्रसरैरवरुद्धदृष्टिभिरन्धकारैरिव दुराचाररपह्रियमाणे प्रमादनिद्राद्वारेण सकलेऽपि धार्मिकव्यापारे किं प्रवर्तिष्यते दानादीनामेकतमोऽपि कोऽपि ? तेन पार(रि)णामिकीं बुद्धिमवलम्बमाना भवतीमापातमात्राऽकार्येऽपि प्रवर्त्तयामि । यदि चात्मन. सकृत्कलङ्कलेशक्लेशमात्रेण सकलापरपतिव्रताव्रतव्रततिसततिसदाधारस्य यश.कुसुमपरिमलपूरितदिगन्तस्य निजप्रजारामिकानन्दकचतुर्वर्गफलनिदानस्य महाराजवरतरोरेतस्य रक्षा सपद्यते । ततः किं न सपन्नम् ? तत[:] स्तोकेन बहुरक्षणलक्षणा विचक्षणतामुररीकृत्य स्वयमेव कृत्याकृत्यविचारचतुराऽसि, परोपकारपरान्त.करणाऽसि निजकार्यधुरा निरस्तोदराऽसि । तत. प्रवर्तस्व मदुपदेशे किं भूयो भूय. कथाविस्तरेणे[ना]त्यभिधाय निवृत्ताया तस्या युवराजैकपत्नी सञ्जातरोपाऽपि कृतकोपोपशमा कालोचितमवोचत्—

ध्रुव विदिताऽसि कृतकवचा यतः सगुणधर्मानुगतेषु धीद्धेषु महादरमकुर्वाणेव वीक्ष्यसे ।

अत्र श्लोके राज्ञः कामोन्मत्ततादर्शनाय पूर्वार्धमिव उत्तरार्धम् अक्षरशः समान शब्दगोचरीकृतं ग्रन्थकृता, नात्र भिन्नार्थता ।

१. एतानि सर्वाणि तृतीयाबहुवचनान्तपदानि 'दुराचारैः' इति पदस्य विशेषणानि । अत्र दुराचाराः उपमेयाः, अन्धकाराः उपमानभूताः । अन्ध०पक्षे सदा प्रकाशमार्गबहिर्गतैः । दुरा०पक्षे सता—सज्जनाना यः आलोकपथः तस्माद् बहिर्भूतैः । अन्ध०पक्षे असद्—अशोभन वृत्त चरित्रम् आचरण तद् अभिमतम् अन्धकाराणाम् । दुरा०पक्षे असताम् असज्जनाना वृत्तं—वर्तनम् तद् अभिमतं दुराचाराणाम् । अन्ध०पक्षे अपलपितः साधुः—शोभनः मार्गः यैः तैः अन्धकारैः । दुरा०पक्षे अपलपितः साधुना सज्जनाना मार्गः यैः तैः दुराचारैः । अन्ध०पक्षे खलरूपाः उलूकाः तेषा पटल—समूहः उत्थापितः यैः तैः अन्धकारैः । दुरा०पक्षे अत्र उलूकरूपाः खलाः दुष्टजना इति बोध्यम्, शेष पूर्ववत् । अन्ध०पक्षे दोषोदय'—दोषायाः—उदयः—रात्र्याः, आगमनम्, तेन लब्धप्रसरैः प्राप्तावकाशैः अन्धकारैः । दुरा० पक्षे दोषोदयः दोषाणाम् असत्यानाचारादिदूषणानाम् उदयः, तेन लब्धप्रसरैः । 'अवरुद्धदृष्टिभिः' एतत् तु उभयत्र समानम्, अन्धकारेण दृष्टिः अवरुध्यते ।

२. 'अवलम्बमाना' इति विशेषण परिव्राजिकाया. । सा वदति यद् अह भाविपरिणामदर्शिका भवताम् आपातमात्रे अकार्ये प्रवर्त्तयामि ।

३. [ अग्रे कृतक—कृत्रिमं, वच.—वचन यस्याः सा कृतकवचाः । सगुणेषु—औदार्यादिगुणसहितेषु अत एव धर्मानुगतेषु, अत एव धिया—बुद्ध्या इद्धेषु—समृद्धेषु नरेषु विषये महादर—महागौरवम् अकुर्वाणैव वीक्ष्यसे । सतीषु शीलभ्रंशोपदेशकत्वात् । अन्यत्र कृतः कवचः सन्नाहो यस्याः सा त्वमेवविधा सगुण—सप्रत्यञ्च धर्म—धनुस्तदनुगतो यः इषुधिः—भस्त्रकस्तेन इद्धेषु अर्थात् सुभटेषु विषये महादर प्रभूतभयम् अकुर्वाणैव वीक्ष्यसे । ]

अध्यापिता केनापि साधुनाऽऽस्तिकोपक्षयनिमित्तमीदृशं भणितुम्। नूनमनयाऽनुरूपया वचनरचनया सदशनवसनदानोपकारो[1]ऽपि तावत् स्तोक एव। तस्मात् सत्यहितायास्तवेदृश्या[2] सत्यमीश्वरोचितो[3]ऽलङ्कारोऽधुनैव समुचित एव।

अपि च,

यत् सकलकुशलतोन्मूलनाय घटयसि कुशीलता[4]मित्थम्।
तल्लोहकारकुलजा कथं परिव्राजिका त्वमसि? ॥१३०॥

कुलममलमन(नि)न्दिता प्रतिष्ठा मतिरपि तावदखण्डितं च शीलम्।
नहि वितरति यावदेत्य मन्त्र विमलमतेरपि शाकिनीव दूती ॥१३१॥

किञ्च,

पात्र[5]स्नेहमपाकरोति परितो दोषोदयेऽग्रेसरी
या कर्तुं मलिनाञ्जनस्य घटना दग्धुं गुणांश्च क्षमा।
जाड्योच्छेदपटीयसी तनुमपि द्वेष्टीव मैत्रीं सदा
सा किं दीपशिखा सखे! नहि नहि क्षुद्रप्रिया दूतिका ॥१३२॥

परिव्राजिकापसदे! असदाचारतत्परोऽपि प्रभुरिति परस्पर विरोधिनी[6] वचने, कि

१. सच्च शोभन च तद् अशनम्, वसनम्—वस्त्रम्, तयोः दानेन उपकारः।

२. सत्याः अहितायाः—सतीशत्रुरूपायाः।

३. ईश्वरः—महादेवः, तस्य उचितः अलङ्कारः, रक्षा—भस्म इति प्रसिद्धम्।

४. कुशीलता—अनाचारः, लोहकारपक्षे 'कुशीलता' भाषाया 'कॉश्य' इति प्रसिद्धम्—खननोपकरणम्। मदनरेखा कथयति या त्व कुशीलता घटयसि, अतः लोहकारकुलजा असि इति प्रतीयते। लोहकारा हि कुशीलता घटयन्ति।

५. अस्मिन् श्लोके दूती-दीपशिखयोः साम्य निरूपितम्। दूतीपक्षे पात्रस्नेहम्—पात्रप्रीतिम् अपाकरोति। दीपशिखापक्षे तैलपात्रगतं तैलम् अपाकरोति। दू०पक्षे दोषाणाम् उदये अग्रेसरी। दी०पक्षे दोषाया रात्रेः उदये अग्रेसरी। दू०पक्षे जनस्य घटना मलिना कर्तुं क्षमा। दी०पक्षे मलिनाञ्जनस्य (मलिनम् अञ्जन तस्य) घटना कर्तुं क्षमा। दू०पक्षे गुणान् सद्गुणान् दग्धु क्षमा। दी०पक्षे वर्तिकागुणान् दग्धुं क्षमा (गुण—वाटनो दोरो)। दू०पक्षे तनुं—स्वशरीरं, जाड्योच्छेदपटीयसी, जाड्यस्य—जडतायाः उच्छेदे कुशलम् इति मन्त्री—मन्यमाना तत् प्रति द्वेष्टि इव वर्तमाना। दी०पक्षे दीपशरीर जाड्यस्य—जडतायाः शीतस्य उच्छेदकरम् इति मन्यमाना दीपशिखा स्वशरीरं द्वेष्टि इव—स्वशरीरमपि दहति इति भाव।

६. 'विरोधिनी वचने' एतद् द्विवचनम्।

1 'नास्ति' को ल।

दोषाकरोऽपि कमलिनीबन्धुरुच्यते। प्रश्नोत्तरवृत्तप्रथमपादोऽपि त्वया कूटे[1] कूट[2]. पठित', पठनीयः पुनरित्थम्—

सर्वस्याभिततेतरं खनिरसौ सा दुर्गति. पृच्छति।

उत्तरोऽपि(रमपि) समाकर्णय—

दु.खखने! नरकगते! राजा तव सगममभिलषति ॥१३३॥[3]

कुत्सितचेष्टाऽलङ्कारोऽपि नरकगतेरेव स प्रियो भवितुमर्हति। पाखण्डिचाण्डालिनि! राजमार्गोऽयं[4] नराजमार्गोऽयम् अगम्यगमनाशयत्वात्। न कुलक्रमोऽयम्[5] नकुलक्रमोऽय, भुजङ्गानुगतक्रियात्वात्। नास्तिकप्रकारोऽयम्[6] नाऽऽस्तिकप्रकारोऽय सर्वथा परलोकपक्षनिर-पेक्षत्वात्। नरकमार्गदीपिके! न पट्कर्मफलमिदम्, किन्तु तवापीह प्रवेशस्य दत्तस्य फलमिदम्-अन्यथा कथमीदृशानि दुर्वाक्यानि ममापि कर्णे प्रविशन्ति। समाकर्णय तत्त्वम्—

स्वाधीनेऽपि पुरन्दरप्रियतमाप्रख्ये[7] निजेऽन्त पुरे
सुप्रापेऽपि जितोर्वशीलवणिमाकारे पणस्त्रीगणे।
यन्मामात्मसुतामहो! रमयितु वाञ्छत्यनङ्गान्धधी-
स्तन्मन्ये सरसामसौ रसवती हित्वा विष काङ्क्षति ॥१३४॥
य उपैति राजसं योगमेति पश्चात् सतामसयोगम्।
योगस्तस्य भविष्यति कदापि नहि तेन सत्त्वेन ॥१३५॥[8]

१. कूटे—कैतवे कृते—कपटवृत्त्या।

२. कूटः असत्यः, अयं श्लोकः १२१ (पृ० ५७)

३. [अभिमतेतर दु'खं खनिश्च दुर्गतिश्च पृच्छति। एतेषा पृच्छकानामुत्तरे सबोधनानि एतानि—दु.खखने, नरकगते शेष स्पष्टम्।]

४ [न राजमार्गोऽय किन्तु नरेषु अजाः—छागाः निन्द्यपुरुषास्तेषा मार्गोऽयम्।]
हे चण्डालिनि! त्वया सूचित' राजमार्गः नराजमार्गोऽयम्—नरा एव अजा'—वर्कराः नराजाः, तेषा मार्गः अयम् अर्थात् नर-पशूना मार्ग.।

५. [न—नैव, कुलक्रमोऽयं किन्तु नकुलस्य—वभो. क्रमोऽय भुजङ्गस्य—सर्पस्याथ च विटस्यानुगतक्रियत्वात्।]
नकुलाना क्रमः अयम्—नकुलक्रम' भुजङ्गानुगतक्रियारूपत्वात्, भुजङ्गा.—विटाः—धूर्तरूपाः, नकुलपक्षे भुजङ्गाः—सर्पा', तेषाम् अनुगतक्रियारूपत्वात्, नकुला हि यत्र भुजङ्गाः वसन्ति तत्र अनुगच्छन्ति।

६. [न—नैवास्तिकप्रकारोऽयं किन्तु नास्तिकाना चार्वाकाणा प्रकारोऽयम्, शेष स्पष्टम्।]
न आस्तिकप्रकार., आस्तिकाना हि न ईदृग. प्रकार'।

७. प्रख्ये—समाने।

८. [यः कश्चिद् राज्ञः—भूपस्य, सयोगमेति—गच्छति, पश्चात् सता—शिष्टानामसयोगम्

आः पापे ! बहुप्रलापिनि ! निजशीलतरुखण्डनेन तस्य किंपाकपादपस्य वृत्तिं कारयन्ती सकलानामपि शीतकल्पवल्लीनामन्तकतां मा नयसि ।

सकृदपि पुरुषान्तरेण योगो
ध्रुवमसतीध्वनिहेतवे युवत्याः ।
सपदि हि निनदोऽत्र घण्टिकायाः
प्रसरति ताम्ररसोपविद्धमूर्त्तेः ॥१३६॥

न यतिवरोऽपि महाप्रभावनीति
भजति जनः स्वयं मनो न शिष्टमार्गम् ।
न यतिवरोऽपि महाप्रभावनीतिं
स्पृशति कदापि गुरावधर्मपात्रे ॥१३७॥

सविशेषं विमृश्य—

वाचाटे ! निर्भाग्यललाटे ! विटचेटकुलटामिव मामपि नटयितुमिच्छसि ? किञ्च, सकलमपीदमालजालमिन्द्रजालमिव तव कल्पितमेव वितर्कयामि । यस्मादसन्तमपि गुणसन्तानमावर्णयन् विगुणसार्थस्य किं न भवति धननिधानं धूर्तजनः ।

चटुपटुरविद्यमानेऽपि गुणगणे येन वयति कीर्तिपटीम् ।
तेन कुविन्दादधिकः स मन्यते विगुणसार्थेन ॥१३८॥

पश्य,

गुर्वाज्ञामुकुटं च यस्य शिरसि त्यागोऽसि मुष्टिश्च सा
पाणौ सत्करुणा त्रपा च हृदये राज्यं प्रजाश्च क्रमे ।

असंबन्धम् एति—गच्छति, तस्य पुरुषस्योपलक्षणत्वात् स्त्रियोऽपि हि तेन इहामुत्रानुकूलेन सत्त्वेन—प्राणिना सह योगः—संबन्धो न भविष्यतीति मणिरथसंगमो निषिद्धः । अन्यत्र यः पुरुषः राजसं रजःपदार्थनिमित्तं योगं—यमादिरूपम् एति स पश्चात् तामसं—तमोरूपं योगमेति । तस्य न हि—न च तेन प्रसिद्धेन सत्त्वेन सात्त्विकभावेन सह योगो भविष्यति ।]

राजसं योगम्—राजगुणस्य योगम्, पक्षे राजसंयोगम्, राज्ञा सह संबन्धं राजसंबन्धम् । सत्त्वेन—सत्त्वगुणेन ।

१ [ वरोऽपि—प्रधानोऽपि जनः, स्वमनः—निजं चित्तम्, न शिष्टमार्गम्—सज्जनपथं नयति—प्रापयति । क्व सति ? महाप्रभौ—नृपत्यादौ अनीतिं भजति सति एतावता मणिरथेऽन्याये प्रवृत्ते प्रजाऽपि तत्र प्रवर्त्स्यतीत्युक्तम् । उत्तरार्धेन दृष्टान्तमाह—न—नैव, यतिवरोऽपि—सुसाधुरपि गुरौ—सूरौ, अधर्मपात्रे—पातकाधारे महाप्रभावनीतिं स्पृशति—चारित्रं पालयति इत्यर्थः । ]

२. [ अविद्यमानेऽपि गुणगणे—शीलादिगुणसमूहे तन्तुसमूहे च शेषं स्पष्टम् । ]

सत्यं सुप्रियवादिता च वदने शीलं बलं चात्मनि
क्षमापालः स कथं चलिष्यति निजान्न्याय्यात् पदात् तादृशः ॥१३९॥

ये इह क्षमैकशरणं वेत्ति सदाचरणकरणपरिणामम् ।
असिधारं व्रतमतुलं त्यजति कथं सैष राजऋषिः ॥१४०॥

अपि च,

स्वैस्था[नो]न्नतिचारुयौवनघनप्रादुर्भवद्विक्रिया-
धारासारजकामपङ्कघटनादुर्गेऽपि मार्गे सताम् ।
वंशे सत्यवलम्बने प्रतिपदाधारे सुपर्वोत्तरे
भूपानां तिलकं स्खलिष्यति कथं तादृक्कुलीनक्रमः ? ॥१४१॥

ततो मुखरिके ! किमद्यापि निजं मुखं दर्शयसि ? किं विस्मृतिपदवीं जगाम सकलमपि निजप्रलपितम् ? किमभिलषसि फलमिदानीमेव तस्य ? इति निर्भर्त्स्य घटचेटिकादत्तार्धचन्द्रां सतिरस्कारं निष्कासयाञ्चक्रे ।

यथा कुविन्दः–तन्तुवायः पटं वयति तथा चटुपटुरपि जनः–चाटुवचनवक्ता मानवः अविद्यमानेऽपि गुणगणे कीर्तिपटीं वयति ।

१. [यो राजा क्षमायाः–पृथ्व्याः एकमद्वितीयशरणं वेत्ति–जानाति च, किम् ? रणकरणस्य–संग्रामविधानस्य, परिणाम–निर्वाहम् । ऋषिस्तु क्षमायाः–तितिक्षायाः एकमद्वितीयं शरणम्–आवासं चरणानां करणानां च जैनागमोक्तानां प्रत्येकं सप्ततिसंख्यानां परिणाम–रहस्यं वेत्ति, शेषं स्पष्टम् ।]

राजऋषिः–अत्र "ऋलति ह्रस्वो वा" [१ २ २] इत्यनेन हैमसूत्रेण ह्रस्वे कृते 'राजर्षिः' इति न भूत्वा असंधिः संजातः तेन 'राजऋषिः' पदं साधु ।

२ [यौवनस्य स्वस्थानं मणिरथशरीरं घनस्य–मेघस्य स्वस्थानं–नभः, विक्रिया–विकारः, सैव धारोपलक्षितः आसारः–वेगवद् वृष्टिः तस्माज्जातः वीनां–चातकपक्षिणां क्रियाया आधारो य आसारो यस्तस्माज्जातः । वंशे–अन्वये वेत्रयष्टौ च, पदाधारे–श्रीकरणादिपदाधारे पदं च क्रमणाधारे च । सुपर्वोत्तरे–वीत्राहाद्युत्सवप्रधाने ग्रन्थिद्वय मध्यमशोभनं च । कुलीनाः–कुलजास्तेषां क्रमः–अन्वयः यस्य स तथा । कौ–पृथिव्यां लीनौ क्रमौ–चरणौ यस्य स तथा । बुद्धेरौत्पत्तिक्यादीनि चत्वारि अङ्गानि युद्धस्य हस्त्यादीनि चत्वारि अङ्गानि ।]

सत्यवलम्बने–सत्याः अवलम्बनभूते प्रतिपदाधारे बुद्ध्याधारे सुपर्वोत्तरे–देववदुत्तमे सुपर्वाणः–देवाः । काष्ठमये वंशपक्षे सत्याः–सन्यासिनीरूपायाः अवलम्बनभूते । प्रतिपदाधारे–प्रतिपदम् आधारभूते । सुपर्वोत्तरे–सुपर्व–वंशस्य गण्डिकाया यद् ग्रन्थिरूपं स्थानं तत् सुपर्व, तैः उत्तरे–उत्तमे ।

वरे[1]चतुरङ्गबुद्धियुद्धोत्सवकृतनास्तिकबलक्षया
प्राप्य निज[2]दुर्गशीलाचलमस्तस्मरचमूभया ।
दुष्टानङ्ग[3]सिद्धिविधिकारणमथ निष्कास्य दूतिका
मुदमधिगम्य मदनरेखाऽधृतपरमानन्दसूतिकाम् ॥१४२॥

इति श्रीजिनभद्रसूरिविरचितायां मदनरेखाख्यायिकायां
श्रीमन्नमिचरित्रापराभिधायां मुदङ्कायां द्वितीय उच्छ्वासः
समाप्तः ॥

१. वरे–उत्तमे, चतुरङ्गबुद्धियुद्धोत्सवे–चतुरङ्ग च तत् बुद्धियुद्धं च चतुरङ्गबुद्धियुद्धं तस्य उत्सवे कृतः नास्तिकबलक्षयः ( नास्तिकस्य बलं नास्तिकबल तस्य क्षयः नास्तिकबलक्षयः ) यया सा चतुरङ्गबुद्धियुद्धोत्सवकृतनास्तिकबलक्षया प्रथमान्त पदम् । अत्र नास्तिकपदेन सा परिव्राजिका ग्राह्या या शीलभङ्ग कारयितु समागता ।

२. °विधिकारणरूपां दूतिकाकारेण समागता परिव्राजिका निष्कास्य मदनरेखा आनन्द-सूतिकाम् आनन्दोत्पत्तिम् अधृत–दधार ।

॥ इति द्वितीय उच्छ्वासः समाप्तः ॥

1 'वर' इति पद ल आदर्शे नास्ति । 2 निसर्गदु° क । 3 °ङ्गसन्धिवि° क ।

## तृतीय उच्छ्वासः ।

अथ तस्या निश्चलशीलकतकचूर्णेन[1] चित्तजलपङ्कं स्वस्यापास्य नृपगृहं प्रस्थितयाऽचिन्ति तदनु[1] दूतिकया—

दीपे प्रज्वलितेऽपि निश्चलशिखे पृष्ठेऽग्रत. पार्श्वतो
रत्नालङ्करणे स्फुरत्यपि तनौ प्रौढप्रभाभासुरे ।
इन्दावप्युदिते रवावपि निरस्ताशेषदोषोदये
नैव क्वापि निवर्तते हतमतेः कामार्त्तदृष्टेस्तमः ॥१४३॥

दिवैव नेक्षते घूकः करटो[2] नक्तमेव सः(च) ।
कामार्त्तः कोऽपि पापिष्ठो दिवा नक्त च नेक्षते ॥१४४॥

सत्यमेवेदमभिधीयते—

साक्षादारभट[3] स भानुतनयो[2] ज्ञो वा कविर्वा गुरु-
र्यद्वा तावदिनोऽपि सोऽपि यदि वा राजा कलाना निधिः ।
यद्वा विश्रुततेजसोऽपि मुनयस्ते सर्वलोकोत्तरा
कामोल्लासघनोदयेन परितो यावन्न रोरुध्यते[3] ॥ १४५ ॥

अन्यथा, किमपरोऽपि कोऽपि विध्वस्तदोषान्धकार[4]. किमपरोऽपि गिरीशमस्तक-[5]

१. कतक नाम जलशुद्धिकर चूर्णम् । अत्र शीलमेव कतकरूपम् ।

२ करटः काकः ।

३ [कामोल्लास एव घनोदयोऽमेयोन्नतिस्तेन । आर एव मङ्गल एव भटः आरभटः, अथवा आरम् अरिसमूह—प्रतिभटः आरभटः, स प्रसिद्धः, भानुतनय' शनैश्चरः । अथ च सभासु स्व-परससत्सु, नुतः स्तुतः, नयः नीतिर्यस्य स सभानुतनयः । ज्ञः बुधग्रहः । अथ विद्वान् कविः शुक्रः । अथ च काव्यकर्ता गुरुर्बृहस्पतिः धर्माचार्यश्च । इनः सूर्यः, स्वामी च । राजा चन्द्रः, नृपश्च । मुनयः मरीच्यादयः, साधवश्च । एते सर्वेऽपि अत्यर्थ रुध्यन्ते ।]

आरभटः शूरवीर. । भानुतनयः अरुणः । कविः शुक्रः कविताकुशलो विद्वान् वा । इनः सूर्यः । राजा चन्द्रः भूमिपतिर्वा । घनोदयेन मेघोदयेन । रोरुध्यते पुनः पुनः भृश वा रुध्यते ।

४ [इदमेव पुनर्भावयति—विध्वस्त दोषाया' रजन्याः अन्धकार येन आदित्येन स तथा । अथ च विध्वस्तं दोषा एवान्धकार येन स तथा ।]

५ [गिरीशः हरः, तस्य चूडामणिश्चन्द्रः । अथ च गिरीशाः विद्वासः, तेषा मस्तकचूडामणिः ।]

गिरेः ईशः गिरीशः महादेवः । गिराम् ईशः गिरीशः विद्वान्–ज्ञानी ।

1 'तदनु' पद डे आदर्शे नास्ति । 2 °यो नो वा डे । 3 रोरोध्यते ल ।

चूडामणि., किमपरोऽपि अश्विनीत्या[1] जनानाममृतसिद्धियोगजनकः, किमपरोऽपि सदा सन्निहितकलानिधिः[2], किमपरोऽपि सुमनसा[3] गुरु., किमपरोऽपि सुरक्षोभाविनाभूतनीतिः[4], किमपरोऽपि छायाप्रभवः[5], परमसौ[6] समग्रग्रहमयस्वरूपोऽपि निरवग्रहमहाकामग्रहगहिलस्तथा सवृत्तः यथा मदनरेखा[3]स्वरूपमयेण पतिव्रताऽऽख्यानमहामन्त्रेणापि स्वरूपावस्थां लप्स्यते[4] वा नवेति चिन्ताचक्रारूढाऽपि समागता राजसदनम्[5], अनल्पविकल्पकल्लोललोलमानसमपश्यच्च राजानम्। निवेद्य च यथावस्थितं पतिव्रतास्वरूपं मदनरेखाया., सविशेपमुवाच—

अनुरागतरङ्गितेऽनुराग
क्रियता नाम न कश्चिदत्र दोपः ।
समुपाययुरा[7]पगा. स्वयं
या न समुद्रोऽपि विहातुमीश्वरस्ताः ॥१४६॥

सकला विफलैव धीमता[6] या विमुखस्य किलानुवर्तना ।
पवनेऽभिमुखेऽप्युपस्थितेऽभिमुखा दीपशिखा किमीक्ष्यते ? ॥१४७॥

१ [अश्विन्याम् इतिः गमन तया, जनानाममृतसिद्धियोगजनकः मङ्गलः । अश्विनोरश्विकुमारवैद्ययोः नीत्या नयेन, लोकानाम् अमृतस्य अमरत्वस्य जीवितव्यस्य सिद्धियोगः निष्पत्तिलाभस्तज्जनकः । अथ च अश्वाः सन्ति अस्याम् अश्विनी, सा चासौ नीतिश्च अश्विनीतिस्तया, अनिष्टा सिद्धिः कार्यनिष्पत्तिस्तस्याः यो योगस्तस्य जनकः ।]

अश्विनीत्या अश्विनीगमनेन, इतिः गमनम्, अश्विनी नाम नक्षत्रम्, तस्याः इति अश्विनीतिस्तया अश्विनीत्या ।

२. [सन्निहित' कलानिधिः चन्द्रः यस्य स तथा बुधः । अन्यत्र संनिहिताः निकटवर्त्तिनः कलानिधयः कलावन्तो यस्य स तथा ।]

३. [सुमनसा देवाना गुरु. बृहस्पति' । अथ च सुमनसा विदुपा, गुरुः ज्येष्ठः ।]

सुमनसा देवाना, शोभनचित्ताना वा ।

४ [सुराणा देवाना क्षोभेणाविनाभूता नीतिर्यस्य स तथा शुक्रः । शोभना रक्षा यस्य स सुरक्षः, भयाप्रभया प्रतापरूपया अविनाभूता नीतिर्यस्य स तथा ।]

५. [छायाप्रभवः शनिः । अन्यत्र छाया शोभा प्रभवत्यस्मादिति छायाप्रभवः ।]

छायाप्रभवः छायासुतः शनिः ।

६. असौ महाकामग्रहः समग्रग्रहमयस्वरूपोऽपि निरवग्रहः निर्गतः अवग्रहः यस्मात् स निरवग्रहः इति विरोधः । परिहारस्तु निरवग्रहः प्रतिवन्धरहित "गजालिके वृष्टिरोधे प्रतिवन्धेऽपि अवग्रह.।" (है० लि० पृ० १३, प० ९)

७. नद्य' ।

1 °नसामभिमततमः किम° डे। 2 समस्तग्र° खल। 3 °खायाः प्रतिव्रतास्वरूपाख्यानम° खल। 4 लप्स्यसे ल। 5 °दमन° ल। 6 °ता विमुखस्यापि हि याऽनुवर्तना। परितोऽपि मरुत्यवस्थि° डे।

सहजमपि न यत्र प्रेम नोपाधितो वा
कथमपि न मुदे स्यात् तत्र सभोगरङ्ग. ।
स्वयमपि परिपाक नैति यन्नापि युक्त्या
फलमिह[1] सहकारस्यापि तत् स्वादु नैव ॥१४८॥

स्वयमेव देवो विचारक.[2] किमहमिह[3] कथयितु पारयामि। तदेतदाकर्ण्य निर्णय करोतु।

रजनिरपि रवेरुपैति योग, सह घटते दिवसेन चन्द्रिकाऽपि ।
गुणरुचिरपि याति नीचचित्तं न च युवराजवधू पुमासमन्यम् ॥१४९॥

राजा तु तेन तदीयेन हितेनापि वचसा महामन्त्रेणेव कालदष्टो न किमपि चेतयते स । केवलं स्मरापस्मार[1]विस्मारितात्मस्वरूपोऽपि मदनरेखायास्तिरस्कारवचनानि[4] पुरस्कार-वचनानीति निश्चिकाय[2]। यतः—

प्रकृतिसरल' स्वान्त शान्त सदा विजितेन्द्रियो
विषयविमुखा या या चेष्टा करोति निसर्गत. ।
मदनजनिता ता ता वेत्ति ध्रुव स्मरमूढधी
सितमपि यथा पीत शङ्ख स कामललोचनः[3] ॥१५०॥

दध्यौ[5] च तदानीमसौ । यथा[6] हि—स्तन-नाभिरमणीया[4] समुद्रतोपितपुष्टाङ्गलता[5] न-खे-विक्रियापरायणा[6] कादम्बिनी[7] सर्वतश्छन्नाङ्ग विधाय ज्योतिश्चक्रं रममाणा[8]ऽपि प्रियतम नीलकण्ठ

१. रोगविशेष', येन देही पुनः पुनः मूर्च्छितो भवति ।
२. निश्चय चकार ।
३. कामलो नाम रोग' येन श्वेतादिवर्णमपि सर्व पीत दृश्यते । कामलयुक्त लोचन यस्य स कामललोचनः ।
४ मेघमालापक्षे स्तनन गर्जनम्, तेन अभिरमणीया ।
५ समुद्रेण तोपिता पुष्टा अङ्गलता यस्याः सा मेघमाला ।
६ गगनविक्रियाया न परायणा ।
७ मेघमाला ।
इमान्येव विशेषणानि मदनरेखाया । मदनरेखापक्षे स्तनौ च नाभिश्च ताभ्या रमणीया । मुद्रया मुद्रिकया सहिता समुद्रा, तोपिता पुष्टा अङ्गलता यस्याः सा । नखैः विक्रियापरायणा । कामिन्यो हि नखैः विक्रिया कुर्वन्ति इति प्रसिद्धम् ।
८. 'रम्'धातोः अकर्मकत्वात् 'ज्योतिश्चक्र रममाणा' इति न घटते, अतः अस्य पदस्य 'रमयमाणा' इति अर्थो वोध्यः ।

---

1 फलमपि स° डे। 2 विहारक. डे। 3 किमह कथ° खल। 4 '°नि पुरस्कारवचना°' इति पाठो निर्गलितः डे आदर्शे । 5 स दध्यौ डे । 6 तथाहि डे ।

प्रमोदयति तथा यदि [1]राजा प्रच्छन्न विधाय रममाणा युवराजं प्रमोदयामीति मदनरेखा निजकलाकौशलेनात्मनो रञ्जयन्ती जनापवादमपि रक्षितुमिच्छति। तदेतद् [2]अपडक्षीणे एव मन्त्रे महीयसि च यत्ने सिद्धयति। मया पुनरसौ अपडक्षीणता स्वरहस्यवेदिनीं परिव्राजिका घटयता विघटितैव मन्दमतिना, केवल [3]तयैव चतुरधुराधौरेयतां धारयन्त्या षट्कर्णस्य मन्त्रस्य भेदम-वश्यभाविनमवगच्छन्त्या केनापि शुभोदर्केण सतिरस्कारमिमा निर्द्धाटयन्त्या विघटिताऽपि घटितप्राया वर्तते। ततो यथोचिताऽऽ[4]वर्जनाऽऽवर्जितसुप्रसन्न[3]तदासन्नदासिकाजनस्य [5]स्वय-मेवमेतत्समीपगमनमुचितमिति कृतनिश्चयः कृताकारसंवरणस्तां दूतिका विससर्ज।

अन्यदा तु विपुलकालवेलाविलम्वयोग्ये क्वापि राजकार्ये नियोज्य युवराजम्, विधाय तद्गृहमपि [6]निर्मक्षिकम्।

> हित्वाऽहङ्कृतिमादित. सहचरीं [5]धृत्वाऽग्रतो मार्दव
>
> पश्चात्कृत्य महत्त्वमप्रतिहत [6]कृत्वा पुरो नीचताम्।
>
> तेजःसपदमप्यपास्य सहजा दैन्यं विधायाऽऽनने–
>
> ऽचालीत् सत्त्वगृहादसौ [7]परवधूत्कण्ठैकवण्ठीयुतः ॥१५१॥

मदनरेखा च समापतन्तं तमेकाकिनमालोक्य [8]करिणिकेव पञ्चाननम्, धेनुकेव शार्दूलम्,

---

१. अत्र 'राजा' इति, राजते इति राट् राजा नृपः इति 'राज्'शब्दस्य तृतीयान्त 'राजा'। राजा सह प्रच्छन्न विधाय अर्थात् प्रच्छन्नं गुप्त विधाय-कृत्वा राजा-राज्ञा सह रममाणा इति आशयः।

२. षड् अक्षीणि यत्र न सन्ति तद् अपडक्षीणम् अत्यन्तगुप्तम्। यत् मन्त्र-क्रीडादिकम् एव क्रियते येन तृतीयो जनो न जानाति, अर्थात् यत्र षड् अक्षीणि न व्याप्रियन्ते।

३. मदनरेखया एव।

४ आवर्जन चाटुकरणम्।

५. '°जनस्य' इति पद राज्ञः विशेषणम्।

६. मक्षिकाणाम् अभावः निर्मक्षिकं शून्यम् इति भावः।

७ उत्कण्ठा एव एका असाधारणा वण्ठी उत्कण्ठवण्ठी। परवध्वाः उत्कण्ठैकवण्ठी परवधूत्कण्ठैकवण्ठी तया युत·। 'वठुङ् एकचर्यायाम्' इत्यस्माद् 'वठ्'धातोः "इकिस्तिव् स्वरूपार्थे" [हैम० ५।३।१३८] इत्यनेन स्वरूपार्थे 'इ'प्रत्यये 'वण्ठिः' ततः स्त्रिया ङ्याम् वण्ठी एकचर्या। परवधूत्कण्ठाया एका असाधारणा वण्ठी एकचर्या, परवधूत्कण्ठैकवण्ठी तया युतः परवधूत्कण्ठैकवण्ठीयुत।

८. करिणी एव करिणिका–हस्तिनी।

1 राजा प्रच्छन्न रममाणा हे। 2 °तादर्जुनाव° हे। 3 'तदासन्न' पद नास्ति हे आदर्शे। 4 °श्रयात् क्व° हे। 5 धृत्वा यतो हे। 6 कृत्वा परो(रा) ख।

कुरङ्गिकेव द्वीपिनम्, कलविङ्कीव[1] शशादन[2] विद्राणवदना[3] तरलनयना स्तम्भितकाया गलित-सकलच्छाया 'हा किमेतद् असमञ्जसम् अदृष्टपूर्वकम् आलोकयामि' इति ससाध्वसा[4] 'कि सत्यमिदम् उतेन्द्रजालम्' इति सवितर्का 'किं स्वप्नदर्शनम् इदम्' इति सावष्टम्भा स्मृतदूतिकाव्यतिकरा च सत्यम्। 'अवनिपतिरेवायम्' इति जातनिश्चया सहसा समुत्थाय पर्यङ्कतः पवनहतपताकिकेव वेपमाना दत्तपृष्ठैव विष्टरान्तरमधितष्ठौ[5]। राजाऽपि तादृशीं तामवलोक्य[5] 'त्रपाभरणा[6] एव कुलबालिका[6] राजन्ते किं पुन· प्रथमदर्शने[7]?' इति मन्य-मानस्तस्मिन्नेव पर्यङ्के निपसाद, सादरं च निजगाद—

सुन्दरि! साधु निर्भर्त्सिता निर्द्धाटिता च परिव्राजिका, साधु रक्षितो मन्त्रभेद·, साधु साधितमभीष्टम्[8], साधु निरुद्धो जनापवाद·, साधु सफलीकृतः कृतज्ञे! समस्तोऽपि ममोपचारः।

मदनरेखा तु तेन वचनविस्तरेण—विवरणेनेव सूत्रम्--तस्य हृदयाकूतमशेषमपि स्फुट-मवोधिष्ट। नून यथावस्थितमिव[9] तया तपस्विन्या ममाशयो निवेदित., सकलोऽपि पुरस्तादस्य[10], परम् अनेन दैवहतकेन 'वामः कामः' इत्यभिव्याप्तिव्यालुप्तविशुद्धबुद्धिना[11] सर्वथा अन्यथै-वावाबुध्यतेति ध्यायन्ती नीरङ्गी च द्राघयन्ती 'न सभाषणीयः सकलोऽपि कुलवधूना परपुरुष. किं पुनरय दुराचार·' इति हारमिवान्तर्लीनगुण[7] मौनमेव पुरश्चकार।

मेदिनीपतिस्तु तथाविधा ता वीक्षमाणोऽपि सप्रणयमपास्तत्रपो व्याजहार—

> एकेनापि[8] पयोधरेण दधता रुद्धाम्वरामुन्नतिं
> शीतांशुर्वहुशोऽभ्यभूयत सदा-न-क्षत्रयुक्तोऽपि स[12]।

१. चटका, "चटको गृहवलिभुक् कलविङ्क· कुलिङ्गकः। योषित् तु तस्य चटका" [—है० अभि० का० ४, श्लो० ३९७]।

२. श्येनः, "श्येनः पत्री शशादनः" [—है० अभि० का० ४, श्लो० ४००]।

३. उदासीनवदना।

४ भयसहिता।

५. आसनान्तरम्, "विष्टर· आसने" [—है० अने० का० ३, श्लो० ६३७]

६. त्रपा लज्जा एव आवरणम् आभूषण यासा ता.। 'कुलबालिका. त्रपाभरणा एव राजन्ते' इति न्यायः। ततः प्रथमदर्शनेऽपि एपा त्रपाभरणा इति स्वाभाविकम्।

७. यत्र गुणा अन्तर्लीनाः तादृशं मौनम्। यत्र गुणाः दवरका अन्तर्लीना तादृश हारम्।

८. [आस्ता इत्यादिभि, एकेनापि पयोधरेण मेघेन। अथ च स्तनेन दधता धारयता, काम्? स्फीतत्वम्, पक्षे उच्चत्वम्, किंविशिष्टाम्? रुद्धाम्वरा व्याप्ताकाशाम्, पक्षे रुद्धकञ्चुकादिवस्त्राम्, तेन शीतांशुः चन्द्रः, वहुशोऽभ्यभूयत पराभूतः। किंभूतोऽपि? सदानैः दातृभिः,

1 कलविकीव खल। 2 °याऽहो कि° ल। 3 °नमिति खल। 4 °रा सत्यमेव इति जात° डे। 5 तामालोक्य डे। 6 °काः किं पुनः ख। 7 °र्शनम् इति म° डे। 8 °ष्टम् साधु साधु नि° खल। 9 °तमेव तया डे। 10 °स्य पुनरनेन डे। 11 इत्यतिव्याप्ति° खल। 12 °य स तदा ख।

विचारधुरन्धरतया पौरजनमानन्दयति । युवराज एवाऽनिरुद्धजनकोपमान-पुरस्कृतधर्मदेशनयाऽऽनन्दसपादको गुरुपदमलङ्करोति । तथापि सर्वेषामपि तेषामहमेव निखिलस्यापि भोगोपभोगस्य भाजनम् ।

ततश्चन्द्रमुखि ! गुरु-लघुप्रक्रियाकृत भेदमशेषमपि वेदान्तरहस्यज्ञेव निरस्य तस्य प्रतिपत्तियोग्यतया तमिव सेवकमपि मा द्रष्टुमर्हति महानुभावा भवती ।

तया पुनरहो ! वराकस्य गाढो ग्रह. 'कथमसावस्माद् मोचयिष्यते' इति चिन्ताऽऽचिताऽऽचान्तचित्तया अभ्यधीयत । महाभाग ! सर्वथा कूटोऽयं तवाऽऽग्रहः ।

उत्कीर्णोऽपि शिलातलेषु रचितः पुस्तेऽपि वैज्ञानिकै-<br>रादर्शप्रतिबिम्बितोऽपि लिखितोऽप्यालेख्यविद्भि. क्वचित् ।<br>साक्षाद् यस्तव सोदरो न लभते सोऽपि स्थिति तद्गता<br>प्रत्यक्षेण विनेन्दुनेन्दुदृषदा कौतस्कुतः स्याद् रसः ? ॥१५७॥

किञ्च,

गुरु-लघुभेदज्ञान न विद्यते यस्य सर्वदा चित्ते ।<br>स विचक्षणोऽपि रक्षा न वृत्तभङ्गस्य कर्तुमलम् ॥१५८॥

१. 'एवाऽनिरुद्ध०' पाठे अनिरुद्धः कामसुतः, तस्य जनकः मन्मथः, स एव उपमान यस्यासौ अनिरुद्धजनकोपमानः तेन पुरस्कृतया देशनया इति। अयमेव भावः विशेषतः समुचितः।

'एव निरुद्ध०' पाठे तु कोपश्च मानश्च कोप-मानौ, जनस्य कोप-मानौ जनकोपमानौ, निरुद्धौ जनकोपमानौ यस्या देशनाया सा निरुद्धजनकोपमाना, तथा पुरस्कृतः धर्मः यस्या सा पुरस्कृतधर्मा। ततः निरुद्धजनकोपमाना चासौ पुरस्कृतधर्मा चासौ देशना च निरुद्धजनकोपमानपुरस्कृतधर्मदेशना तया निरुद्धजनकोपमानपुरस्कृतधर्मदेशनया ।

२. यथा सर्वत्र एकमेव ब्रह्म मन्यमाना अभेदैकदृष्टयः वेदान्तरहस्यज्ञा गुरु-लघुभेद न जानन्ति तथैव हे चन्द्रमुखि ! त्वमपि इद भेद निरस्य मा द्रष्टुमर्हसि । अत्र 'तमेव' स्थाने 'तमिव' इति उचितम् । तत' तमिव युगबाहुमिव मा द्रष्टुमर्हति इति भावः ।

३ चिन्तया आचितम् आचान्त च चित्त यस्याः तया ।

४. पुस्ते शिल्पे लेप्यविधाने पुस्तके वा । "पुस्त शिल्पे लेप्यादिकर्मणि । पुस्तके" [—है० अनेका० का० २, श्लो० १८१, १८२], भाषाया 'पुस्त' शब्दः प्रसिद्धः । "पुस्त लेख्यपत्रसघात." [—है० लिङ्गा० पृ० १२५, प० २] ।

५. गुरु अह्रस्वः द्विमात्रिकः। लघुः ह्रस्व. एकमात्रिक.। वृत्तं छन्द'। गुरु उत्तमः गौरवशाली, लघु. अनुत्तमः लाघवशाली । वृत्त चारित्रम् ।

1 °रहस्येव डे । 2 °चिताभ्रात(न्त)° डे । 3 पुस्तेषु विज्ञायिकै° डे । 4 स्थित तद्गत ख, स्थित तद्गता ल ।

तत्र[1] एकत्र तावदसावनङ्गचक्रवर्ती वलात्कारेणापि मामनुलङ्घ्यशासनः प्रवर्तयति। सुदती पुनरियमन्यत्र तद्भयवैधुर्यलवमप्यज्ञातवतीव निवर्तयति। तदहो! व्याघ्रदुस्तटीन्याय-सङ्कटमापतितोऽस्मि[1] किमह करोमि[2]। यद्वा वक्रोक्तिकया कयाचिदुत्साहयामीति कुविकल्प-पराधीनचेतसा प्रलपितमचलेश्वरेण। कुरङ्गनेत्रे! वृत्तभङ्गरक्षणविचक्षणे[3]! समाकर्णय निजवृत्तम्—

केशे[2]-भ्रू-भाल-नासा-श्रुति-रद-नयनास्योष्ठ[4]-वाहु-स्तनाना
नाभीमध्योरु-जङ्घा-चरण-नखमणिश्रेणिदेहद्युतीनाम्।
प्रत्येक[5] केकिपिच्छाद्युपमितिपदवीहारिणा स्थानदानं
कृत्वा कस्मादकस्मादपहृतमधुना चित्तरत्न त्वया[6] नः ॥१५९॥

अहो! अस्याऽसंवद्धभापिणोऽपूर्वा काचिदबद्धमुखता, किमसाध्योऽयम्! इति पर्यालोचयन्त्या मदनरेखया न्यगादि।

इह निपतन्तु तुहिनकिरणादपि खदिराङ्गारवृष्टय
स्फुटमुदयन्तु भानुविम्बादपि तिमिरप्रकरसृष्टय.।
प्लावयतु क्ष्मामशेपामपि ननु रत्नाकरोऽधुना
यद् भवताऽप्यनीतिरारभ्यत[7] घटयितुमेकसाधुना ॥१६०॥

राजा तु तेन सामवचनेनाभिनवघनाघनस्तनितेनेव कृपीवलो मनसि मनागरमात्रमुद्[3][8]-श्वसिद्, अचिन्तयच्च[4]। सकृदपि यदि कथञ्चिदियमाननमस्मदीयमीक्षते ततोऽवश्यमनुराग-

१. सकट प्राप्तोऽस्मि, अथवा संकटे आपतितोऽस्मि।

२. [केशेत्यादिवृत्ते—मयूरकलापस्य केशैः, कामधनुषो भ्रूभ्याम्, पञ्चमीचन्द्रस्य भालेन, दीपशिखाया नासिकया, अन्यत्तमपाशाना श्रुतिभ्याम्, कुन्दकलिकाना दन्तैः, नीलोत्पलाना चक्षुर्भ्यः, पूर्णचन्द्रस्य आस्येन, प्रवालखण्डानाम् ओष्ठाभ्याम्, स्वर्णवल्लया. वाहुभ्याम्, स्वर्णकुम्भस्य स्तनाभ्याम्, समुद्रावर्त्तस्य नाभ्या, स्वर्णस्तम्भानाम् ऊरु-जङ्घाभि., कूर्मस्य पद्भ्याम्, पद्मरागस्य नखैः, स्वर्णस्य देहद्युत्या सर्वस्वमपहृतं भवत्या, शेप स्पष्टम्।

३. मनाग् अल्पम्। अरमात्र शीघ्रप्रमाणम्—शीघ्र शीघ्रम्। उदश्वसित् उच्छ्वासान् अग्रहीत्

४ 'अचिन्तयच्च' अत्र 'च'शब्देन क्रियाद्वय सूचितम्—'उदश्वसित्, अचिन्तयत्' इति।

1 'तत्र' पदं नास्ति डे आदर्शे, ख आदर्शे 'तत्र' स्थाने 'ततः' इति पदम्। 2 व्याघ्र-सङ्कटदुस्तटीन्यायमा° डे। 3 °णे ममाक° ल। 4 °नास्फोटवाहु° डे। 5 ख्यातश्रीमान् कलाप-प्रमुखरुचिहृता स्थानदान विधायास्माकं कस्मा° डे। 6 त्वयेदम् डे। 7 भवताऽघनीति° ख। 8 °मुदचिन्त° ख।

[1]वक्त्र स्वप्रतिमाप्रणुन्नतनुभिर्द्वावप्यधोऽकारयद्
यत्तौ हा-र-मणीभिरस्य न शुभो नीरङ्गिकापह्नव. ॥१५२॥

पुरा वातायनोपविष्टायास्त्रिविष्टपैकचन्द्रिकाया राजैकसपर्कयोग्यायास्तव महानुभावेनामुनैव कलानिधिना कारितोऽहमेतावन्तमहर्निशमपि गुणपक्षपातम्, तेन परमगुरोरिवास्य तिरस्कार-कारिकामिमा क्षमापतिरपि सोढुमिदानीमक्षमोऽस्मि। ततो निवार्यतामियमनार्या, दृष्टे चास्मिन्नस्यादेशेन प्रायस्तन्नास्ति यन्न कर्ताऽस्मि। यस्याश्च वदन सदा संपूर्णमण्डलं राजानमप्यङ्कपतित दास करोति तस्यास्तव 'स्वागत'वचनमात्रप्रतिपत्तिप्रदानेऽपि दारिद्र्यम्? [3]यदि वचनेऽपि दारिद्र्य तदा दृष्टिमात्रेणापि क्रियतां प्रसादः इत्यभिदधाने तस्मिन्नवनीपतौ पतिव्रताव्रतलब्धरेखा मदनरेखा चेतसि चकार—

हा धिक् परव्यसनसपादनपटीयसः पापीयस. पञ्चबाणस्य विलसितम्, यदनेन कवलित-मतयो विवेकिनोऽपि निर्विवेकतया निर्विचारकशिरोमणय सपद्यन्ते। महाकुलीनशिरोमणयोऽपि निरपत्रपतया विटपेटकचेटकादपि निकृष्टचेष्टया चेष्टन्ते। महामहिमानोऽप्यतुच्छतुच्छतया प्रकृतिनीचेभ्योऽपि नीचता दर्शयन्ति। समस्तशास्त्रोपनिपद्वेदिनोऽपि समुचिताचारचातुरी-वन्ध्यतया मूर्खशिरःशेखरता स्पृशन्ति। परिकलितसकलनीतयोऽपि दुर्नयमहार्णवमग्नतया

क्षत्रियैर्युक्तोऽपि। अथ च सदा नित्य, नक्षत्रैः अश्विन्यादिभिर्युक्तोऽपि तौ पूर्वोक्तसामर्थ्यौ द्वावपि पयोधरौ स्तनौ कर्मतापन्नौ, यत् त्वदीयं वक्त्रं कर्तृ 'हा'शब्दः खेदे, रमणीभिः स्त्रीभिः आस्ता सुभगादिभिः कृत्वाऽधः कारयाञ्चक्रे अवाजापयत्। किंविशिष्टाभि॰? स्वप्रतिमा 'निजः कश्चिदाङ्गिकः पुरुषो मम प्रतिविम्वोऽस्य पुरुष.' इति लक्षणा तया प्रणुन्ना प्रेरिता, तनु. शरीरं यासा ताभिः स्वप्रतिच्छन्दतुल्यरूपाभिः। अथ च हारमणीभि हारमौक्तिकैः मुखप्रतिविम्व प्रणुन्नतनुभिः कृत्वा, अस्य वक्त्रस्य नीरङ्गिकयाऽपह्नव. लगनम् अतो नोचितम्।]

रुद्धाम्वरा रुद्धगगनाम्, उन्नतिम्-उन्नतस्थितिम्, दधता एकेन अपि पयोधरेण-मेघेन, तदा तस्मिन् प्रावृट्काले, नक्षत्रयुक्तोऽपि स शीतांशु॰ वहुशः अभ्यभूयत पराजीयत। अत्र तु मदनरेखाविषये ततो विपरीतमेव जातम्, तथाहि—मदनरेखाया वक्त्रमेव शीतांशु॰ तद् वक्त्रम्, स्वप्रतिमाप्रणुन्न-तनुभिः हारमणीभि अर्थात् चञ्चलै॰ हारमणीभिः तौ द्वौ अपि पयोधरौ स्तनौ अधोऽकारयत्। पूर्वं पयोधरेण शीतांशु अभिभूतः, अत्र तु वक्त्रशीतांशु. तौ पयोधरौ अपि अधोऽकारयत्—पराभव प्रापितवान् इत्येवम् अस्य दृश्यस्य नीरङ्गिकया अपह्नवः तिरोभावः क्रियमाणः न शुभः शोभनः। निरङ्गी नीरङ्गिका वा मुखाच्छादनवस्त्रम्, तया च स्त्रियः परपुरुषाणा समीपे स्वमुख स्वशरीर वा आच्छादयन्ति इति प्रसिद्धम्।

१. तिरस्कारकारिका नीरङ्गिकापह्नवप्रवृत्तिः। मुखकलानिधिसमाच्छादनप्रवृत्तिरिति यावत्।

२ क्षमाया॰ सहिष्णुताया॰ पति॰ अपि सोढुम् अक्षम. इति विरोधः। क्षमायाः पृथिव्याः पतिः इत्येव विरोधपरिहार.।

1 वक्त्र सप्रति॰ ख। 2 ॰स्त्रिभुवनैक॰ ङे। 3 यदि च व॰ ल।

महाकुलीरतां[1] कल्पयन्ति । भुवनविश्रुतकीर्तयोऽपि गुरुतल्पकेभ्योऽपि[2] हीनमूर्त्तयो भवन्ति । सुमनसोऽपि नारकेभ्योऽपि दुर्मनायमानमनसो[1] जायन्ते । यतः—

> ये सिद्धान्तसुधावितृष्णमनसो ये सद्गुरूपासना-
>
> स्नानापास्तमला निरस्तजडिमध्यानाम्बरालङ्कृता ।
>
> एका सिद्धिवधू विहाय सकलाः पश्यन्ति ये योषितो
>
> विष्ठाकोष्ठिकया समाः प्रतिकल तेभ्यो यतिभ्यो नमः ॥१५३॥

यदि कथमपि तेषामसौ बहुमानौषधेन निरस्तस्मरापस्मारः शक्यते कर्तुं तदस्य जीवित-तरोरतुल फलं भवति ।

> सकलेऽपि जीवलोके तेनेहामारि[2]घोषणोद्घुष्टा ।
>
> एकमपि दुःखितं यः सत्त्वं बोधयति जिनधर्मे ॥१५४॥

इति हेतुना सा वक्तुमारभत ।

> स्मर कुलममलं तथा प्रतिष्ठां जय करणानि सहामुना स्मरेण ।
>
> उपचिनु सुकृतं सहैव कीर्त्या परमपरं च महोदयं लभस्व ॥१५५॥
>
> नेत्राधःकरणं पुरोपसरणं नीरङ्गिकावर्द्धनं
>
> धर्मोऽयं कुलयोषितामभिमतो ज्येष्ठेऽन्तिकस्थे न किम् ।
>
> स्मेरा कैरविणी कदाचिदुदयाद्रिस्थे दिनाधीश्वरे
>
> दृष्टा वा यदि वा श्रुता किमथवा केनापि सभाविता[?] ॥१५६॥

इति भाषमाणायामेवास्यामवनीश्वरो जजल्प—कृशोदरि ! युवराज एव प्रबलातुलबल-दलितविपक्षकुलतया प्राज्यमपि राज्यमर्जयति । युवराज एव प्रतापप्रसरप्रतिहतदुर्दान्त-सामन्ताहङ्कारतया वर्यमैश्वर्यमपीदमुन्नमयति[3] । *[4]युवराज एव निश्चितोपायन्यायकञ्चुकि-व्यापारतया सततमक्षूणा[3] लक्ष्मी शुद्धान्तमृगाक्षी रक्षति । युवराज एव निर्विकारकारसाराचार-

१. कुलीरः कुलिनम् ईरयति वा कुलीरः कर्कटः, महाकुलीरा हि महार्णवे वसन्ति । कुलीरा हि भाषायाम् 'करचला'नाम्ना जलचराः प्रसिद्धाः ।

२ "तल्प रणमण्डपः अट्टः दाराश्च" [—है० लि० वृ० पृ० ९८, प० २५] 'अत्र गुरुतल्पकः गुरुदारगामी अथवा तल्पं शयनीयं, गुरुतल्प गुरुशयनीयम्, तद्गामी । गुरुस्तु धर्मगुरुर्विद्यागुरुर्वा । अत्र 'तल्पक'स्थाने 'तल्पग'पदेन भाव्यम् ।

३ अविकलाम् सकला समग्राम् । 'क्षूण विकलता' [—लिङ्गानु० पृ० ९, प० ५]

1 °मानमानसो (सा) डे । 2 तेनात्रामारि° डे । 3 °मपोहमु° डे । 4 * * एतच्चिह्नान्तर्गतः पाठः खल आदर्शयोः नास्ति ।

तरङ्गरङ्गिता भवति। ममाप्येतस्या मुखमीक्षमाणस्यैव तदानीमयमनुरागसागरः समुल्लासेति वितर्कमुखरितो विरुराव-मञ्जुलालापपीयूषमेघलेखे[1] मदनरेखे चन्द्रलेखाज्योत्स्नयेव चकोर-मिथुन निजवदनचन्द्रिकया कारय चिरतृपितं मम लोचने पारणम्।

अहो! दुराचारताऽतिमात्रा अस्येति ध्यायन्ती[2] सा पवित्रचारित्रा दशनांशुवरत्राभि-स्तमधममनङ्गान्धमगाधव्यसनान्धकूपादुद्दिधीर्पुरिवाब्रवीत्।

[1]कुमारेण [3]सुमारेण यो यो मारममारयत्।
तस्मै तस्मै [4]नमस्तस्मैऽन्यस्मै कस्मैचिदस्तु मा ॥१६१॥

याम्नायन्त इहान्वह तव कुल शील वल प्रोज्ज्वल
मर्यादा च कुलीनता च विशदप्रज्ञा च लज्जाऽपि च।
त्यक्तास्ता अपि येन भीरुमनसा कन्दर्पमातङ्गत-
स्तस्याऽसत्त्वशिरोमणेः कथमहो! द्रष्टु मुखं युज्यते ॥१६२॥

[2]रुचिरहितैव विना शमेन साऽविरतिरनीतिपथादकारि या।
रुचिरहितैव विना शमेनसामिह विदधाति समन्ततोऽप्यसौ ॥१६३॥

स्मर एव शरीरिणोऽन्तरङ्गद्विप[3]तामप्रतिमा तनोति पुष्टिम्।
[5]इत एव यदुल्लसन्ति सर्वे जगति क्रोध-मद-प्रपञ्च-लोभाः ॥१६४॥

स्मर एव कलङ्कपङ्कहेतुर्विमलस्यापि कुलक्रमस्य लोके।
न [6]विना हि कुरङ्गसगते स्यादपरं लाञ्छनमस्य शीतरश्मे· ॥१६५॥

१. [कुमारेणेत्यादौ-कुत्सितमारेण उपवासाऽऽचामाम्लादिना। शोभनमारेण, भरतचक्रीव स्वादर्शकगृहान्तर्गत ध्यानेन मार-काम यो योऽमारयत् क्षपितत्वात्, शेप स्पष्टम्।]

२. [या अनीतिपथात्-अन्यायमार्गात् शमेन विना विरतिः-निवृत्तिः, अकारि-कृता, सा रुचिरहितैव, एवंविधव्यवसायिन· नास्ति निवृत्तिफलमित्यर्थः। रुच्या-श्रद्धया राजन्ते रुचिरास्तेभ्यो हितैवासौ विरति· एनसा विनाश·-पातकाना क्षयं विदधाति, न तु श्रद्धाविकला।]

अस्य श्लोकस्य एवमन्वय -विना शमेन या अनीतिपथाद् अविरतिः अकारि सा अहितैव रुचिः, असौ अहितैव रुचिः श विना-सुखं विना इह जगति समन्तत· अपि एनसा-पापानां विदधाति—सर्वथा इह जगति पापानि एव विदधाति अर्थात् भवता रुचिः अहितकारिणी तथा पापविधायिका च।

३ द्वेष्टि इति द्विप·। अत्र "नाम्युपान्त्यम्" [५।१।५४] सूत्रेण 'क'प्रत्यये 'द्विप'पदम् अकारान्तम्, द्विपस्य शत्रोर्भावः द्विपता-शत्रुता-ताम्।

1 मेघमाल[ले]खे डे। 2 °न्ती ततः सा डेल। 3 सुकुमारेण ख। 4 नमस्तान्मेऽन्य° डेख। 5 अत एल डे। 6 विवाहि° ख।

स्मर[1] एव गले शिलाऽङ्गभाज[1] सस्रुतिरौद्रसमुद्रमुत्तितीर्षो ।
अयमूर्ध्वगतिर्विलक्षणोऽपि व्रजति ब्रह्मपद किमन्यथा न ॥१६६॥
स्मर एव महातम. पृथिव्या यदय लुम्पति देहिनोऽस्य दृष्टिम् ।
अत एव विमार्गचारितैषा प्रकटज्योतिपि शास्त्रलोचनेऽपि ॥१६७॥
स्मर एव विजीयता किमन्यैर्यदनेनैव जितेन साध्यसिद्धि' ।
उदिते गलितु हि संहिकेये[2] परिपूर्णोऽपि विभाति कि सुधाशु ॥१६८॥
स्मर एव जितो जयाय पुसा विजिते तत्र सुख न चापरस्मिन् ।
कुलशीलपराक्रमक्रमेपु प्रहर[3] देहि विधेहि चात्मपथ्यम् ॥१६९॥
स्मर एव रुणद्धि सद्विवेक[2*] दलयन्त कुमति[4] शरीरभाजम् ।
प्रथिते घनमण्डलेऽन्तरिक्षे न रुचिर्भानुमतोऽपि हन्ति जाड्यम्[3] ॥१७०॥
जनकोऽसि मम त्वमुच्यसेऽद स्मरसवन्धमितस्मरश्च[4] भूयाः ।
कुरु राज्यमकार्यचेष्टित तु त्यज विस्तारय कीर्तिमिन्दुशुभ्राम्[5] ॥१७१॥
स्वय[6] वुध्यस्व[5] बुद्ध्याऽसि नरवीर! विराजित' ।
वोधितो हि न भासि त्व न-रवी-र-विराजित ॥१७२॥

१. शिला–पापाण. । यस्य गले शिला लग्ना स कथं जले तरणसमर्थः ।

२. राहो ।

३. [ अग्रेतनानि वृत्तानि सुगमानि । प्रहर रक्षाङ्गीकारम् । ]
प्रहर देहि याम देहि, भापाया 'पहेरो दे–चोकी कर' इति आशय. अनेन वाक्येन व्यज्यते ।

४. कुमतिं दलयन्त सद्विवेक शरीरभाज स्मर एव रुणद्धि इति अन्वयः । अत्र सन् प्रशस्तः विवेको यस्य तादृश शरीरभाजम् इत्येव 'सद्विवेक'पद शरीरभाजो विशेषणम् ।

अस्य पद्यस्यायमाशयः त्व मम जनकतुल्यः पितृतुल्यः अत. त्वयि ममत्व तेन अदः इद प्रस्तुतम् उच्यसे त्वम्—त्वामहं इद वच्मि । स्मरवन्ध पुनः पुनः स्मरस्य वन्धन यथा स्यात् तथा स्मरस्य वन्धनपूर्वकम् इतस्मरः गतस्मरो भूयाः । 'स्मरसवन्धम्' इति पाठे स्मर सम्यग् वध्वा यथा स्यात् तथा निरुद्धय इतस्मरो भूया. । एव च कृत्वा राज्य कुरु, अकार्यचेष्टित त्यज, तथा इन्दुशुभ्रा धवला कीर्तिं विस्तारय इति ।

५ [ स्वयमित्यादौ हे नरवीर मणिरथ! बुद्धया विराजितोऽसि, 'तत्'शब्दाव्याहारोऽत्र, ततो वोधितोऽन्यैरित्यर्थः, न भासि–न शोभसे । अर्थान्तरन्यासमाह–हि अस्मात् कारणात्, रविः आदित्यः, न नैव, रविणा आदित्यान्तरेण राजित. शोभितः, स्वय तस्य शोभमानत्वात् ]

1 नास्त्यय श्लोकः खल आदर्शयो । 2 * + एतच्चिह्नान्तर्गत' पाठ' डे आदर्शे पतितः । 3 जाड्याम् ख । 4 स्मरवन्धमतस्म° डेल । 5 °न्दुशोभाम् डे । 6 स्वयमुद्यस्त-बुद्ध्याऽसि डे ।

स पुनरीदृशेऽपि [1]कुग्रहविग्रहनिग्रहभास्करायमाणेऽपि सदुपदेशे, तथाविधेऽपि सहृदय-कुमुदसुधाकरायमाणे चेष्टिते स्फुटेऽपि 'जनकोऽसि' इत्यादिवचनपीयूषतो हृदयसमुद्रे कथमसौ मम श्रवणपीयूष भणित विस्तारयिष्यति इति चिन्ताचक्रभ्रान्त[1]स्वान्ततया घटयन्नात्मनो[2] दुर्घटान् सदैन्यमुवाच—

[3]और्ववह्निरिव मन्मथानलो वारितोऽपि हरिणाक्षि ! वर्धते ।
अङ्गसङ्गसुधयाऽऽत्मनोऽनया सत्वर [4]शममतः स नीयताम् ॥१७३॥

मदनरेखया तु चिन्तितमहो ! सर्वप्रकारैरसाध्योऽय व्याधिरुपेक्षणीयश्च । यावच्चाद्यापि नार्यपुत्रागमनसमयस्तावदत्रासितुमना. संभाव्यते । न चोपशमसारवचनव्यापारयोग्योऽयम् । यतः—

उप[5]शमितक्षुद् द्राक्षा[6]ऽमृतसोदरशान्तरसतरङ्गिण्या ।
मम वाण्याऽपि न शमितः शृङ्गाराङ्गारदाहोऽस्य ॥१७४॥

त[3]थाऽपि नोपेक्षणीय इति पुनरुवाच ।

स[7]ह-जरा-मरणोदयवीक्षणादपि न यो विरमत्यधमात् पथ. ।
जगति राक्षस एव स तत्त्वत· [8]प्रबलमानवश गतवानपि ॥१७५॥

हे नरवीर ! त्व वुद्ध्या विराजितः असि, नरवीरैः अथवा नरवीरेषु विराजित त्वः वोधितः सन् न भासि अर्थात् त्व स्वय वुद्ध्यस्व, तव वोधने न तव शोभा इति भावः । रविः न रविराजित·, न अन्यरविणा रवी राजितो भवेत् ।

१. [ कुग्रहाणा मङ्गलाना कदाग्रहाणाम् । विग्रहाः शरीराणि, विस्ताराश्च तेषा तिरस्करणाद् भास्करिते । ]

कुग्रहा· मङ्गल-बुधप्रभृतयः, कदाग्रहाश्च दुराग्रहाः । तेषा यथाक्रम विग्रहाः शरीराणि विस्ताराश्च । तेषा भास्करसमाने प्रकाशरूपे च सदुपदेशे ।

२. ' आत्मनो दुर्घटान् घटयन् सदैन्यमुवाच ' इति अन्वयः ।

३ और्वः वडवानल. ।

४ अतः स शमं नीयताम् इति अन्वयः ।

५. [ उपशमिता क्षुत् क्षुधा यया सा द्राक्षा अमृतं च तयोः सोदरः शान्तरसः तत्तरङ्गिण्या नद्या । अथ च, अन्यत्र उपशमितानि क्षुद्राणि अक्षाणि इन्द्रियाणि यस्याः सकाशात् सा तथा । तस्याः अमृतसोदरस्य शान्तरसस्य तरङ्गिण्या, शेष स्पष्टम् ]

६. ' उपशमितक्षुद् ' इति द्राक्षायाः विशेषणम्, तथा अमृतसोदरशान्तरसतरङ्गिण्याश्च विशेषणमपि नानुचितम् ।

७. [सहज· अकृत्रिमः यः रामस्य काकुत्स्थस्य, रणोदयः सङ्ग्रामप्रारम्भः, तद्वीक्षणादपि अधमात् पथात् निन्द्याद् मार्गात्, यः न नैव विरमति स प्रबलस्य मानस्य वशगतोऽपि तदायत्तोऽपि, स तत्त्वतः स्वभावत· राक्षसः एव रावण एवेत्यर्थ· । अन्यत्र सह सम जरा-मरणाभ्या वर्तते सहजरामरणः स चासौ उदयश्च–राज्याद्युच्छ्रयः तद्वीक्षणादपि अधमात् पथः यो न विरमति स तत्त्वतः परमार्थत· राक्षस एव राक्षसाचारचारित्वात् । किंविशिष्टः ? प्रबला ये मानवाः सुभटाः, शं सुखं च तत् कर्मतापन्नं गतवानपि । ]

८. प्रबलं मानवसौख्यम् । गतवान् प्राप्तवान् ।

1 °न्तस्वान्त° डे । 2 °नो दुःखवटान् डे । 3 तथा नो° ख ।

वैरमेकं विषमरण नारीणामनुगतिर्न चान्यस्य ।
मारेऽपि सदा-कारागारे वल्गति कुलीनानाम् ॥१७६॥
यः पतितादपि पतितो भिन्नो दधदपि सदाचरणलीलाम् ।
यो-नाऽपर(रा)मिच्छति त(ता) तन्मुखमपि नेक्षितु युक्तम् ॥१७७॥
पश्यन् मा स्मरदृष्ट्या कामातुर ! शङ्कसे न युगबाहो. ।
विषये स्पृहा तवैषा का-मातु-र-शङ्कसे न युगबाहो ! ॥१७८॥

अपि च,

सन्मार्गस्खलन विवेकदलन प्रज्ञालतोन्मूलन
गाम्भीर्योद्वमन स्वकायदमन नीचत्वसपादनम् ।

१ [कुलीनाना नारीणां स्त्रीणा वर प्रधान, एकम् अद्वितीयम् । विषेण गरलेन मरणम्, न चान्यस्य परपुरुषस्यानुगतिः सगमः । क्व सति [2] मारेऽपि कामेऽपि, वल्गति सति । किंभूते [2] सत् शोभनो य आकारः आकृतिः, तस्य आगारे आवासे अत. तत्त्व त्वत्समाहितमाचरामीत्यर्थः । अथ च कुलीनानाम् अर्थसामर्थ्याद् रूपाणा मारे मृत्यौ, सदा नित्य, कारागारे कारागृहे वल्गत्यपि वरं प्रधानं, एक विषमरण दुष्करसंग्रामः । न नैव तु अरीणा शत्रूणाम्, अनुगतिः सेवा, न चान्यस्य भूपतेः सेवा, एतावता मदनरेखायाः स्वस्य ज्येष्ठस्य चाचारो निवेदित. । ]

विषमरण–विषभक्षणपूर्वक मरणम् अथवा विषम रण–युद्धम्, सदा–कारागारे सदा कारागाररूपे अथवा शोभनाकारागारे मारेऽपि कुलीनाना स्त्रीणा पुसा च न अन्यस्य अनुगतिः वल्गति । अत्र 'कारागारम्' इति अखण्डमपि पदम् कारायाः वन्धनस्य अगार गृहम् इति कारागारम् । तथा शोभनाकारस्य अगारे–गृहे इत्यत्र गृहवाची 'अगार'पदमपि ।

२ [ पतितादपि अगम्यगमनादिना भ्रष्टाचारादपि, पतित. परिणेतु. सकाशाद् यो भिन्नः अन्य., सत् शोभनाम्, आचरणलीलाम् आचारचातुरीं दधदपि धारयन्नपि । त पतिं परपुरुष या काचिद् ऊना शीलरिक्ता इच्छति सेवितुमभिलषति, शेष स्पष्टम् । अन्यत्र पतितादपि मृतादपि आस्ता जीवतः स्वामिनः सकाशाद् यो भिन्न. व्यतिरिक्तः, सदा नित्य रणस्य युद्धस्य लीला दधदपि तमेवविधम् अपर प्रभुवैरिण य· कश्चिद् ना पुरुष· स्वामित्वेनेत्यर्थः । इच्छति तन्मुखमपि नेक्षितु युक्तम् । ]

३. यो ना पुरुषः, ताम् अपराम् इच्छति इति अन्वयः । अथवा या ऊना शीलेन ऊना अपरम् नरम् इच्छति इत्यपि आशय· ।

४. [ हे कामातुर ! मा स्मरदृष्ट्या सकामचक्षुषा पश्यन् युगबाहोर्लघुभ्रातुर्न शङ्कसे न बिभेषि । अशङ्का निर्भया सेना यस्य स हे अशङ्कसेन ! युगबाहो ! युगप्रलम्बदोर्दण्ड ! मणिरथक ! तवैषा मातुर्विषयस्पृहा मातरि लघुभ्रातृपत्न्या चागम्यत्वसाम्यात् । ]

५. "शङ्का स्यात् संशये भये "—(है० अ० का० २, श्लो० १) इति वचनात् अशङ्का निर्भया इति आशयः ।

1 °मनुनति° ढे । 2 °लीनाम् ख । 3 °खशसेन ख ।

दिवसपतिर्विमुच्य[1] पूर्वामपि यात्यपराम् । अथ च स पूज्य एव सन्ध्याकृतरागभर, रविपुरुपान्तर न पश्यति, अपि नश्यति वा तदपि निगद्यते सदोषा रजनी हि जनैः । तत. प्रत्यक्षीकृतेऽपि स्वलोचनाभ्या मया स्वयमेव प्रतिपद्यमाने यथावस्थितेऽपि[2] भूपतिस्वरूपे[3] वञ्चकत्वादिदोषप्रवादाधारतया हतकस्य युवतिवर्गस्य, निरवधितया बान्धवपक्षपातस्य स्वच्छाशयतया निजचित्तवृत्तेर्न[4] प्रत्येष्यति युवराजः । यत.—

---

उचिता । विस्तारिणस्तरङ्गाः यस्या सा तथा । कमलैः–पद्मैः अभिरामा । परमहंसे–राजहंसे वकेऽपि तत्तदुचितं सपादयन्ती । ]

सदम्भा–सकपटा स्त्रीजातिः, पक्षे विद्यमानजला नदी । असौ स्त्रीजातिः अमृतपदम्–आत्मपूर्णतायाः स्थानम्, असौ नदी अमृतपदम्–जलस्थानम् । स्त्री०पक्षे कुलीना–कुलमर्यादावती, नदीपक्षे कुलीना–पृथिव्या लीना । स्त्री०पक्षे धीवरोचिता–धीवराणा वुद्धया वृहस्पतीनाम् उचिता, नदीपक्षे धीवरोचिता धीवराणा–कैवर्ताना–मत्स्यग्राहिणाम् उचिता । स्त्रीपक्षे विस्तारितरङ्गा–विस्तारितः रङ्गः–रागः नृत्य वा यया सा, नदीपक्षे विस्तारितरङ्गा–विस्तारिणः तरङ्गाः यस्याः सा । स्त्री०पक्षे कमलाभिरामा कमलया–लक्ष्म्या अभिरामा वा, कमला इव–लक्ष्मीरिव अभिरामा–सुन्दरा, नदीपक्षे कमलाभिरामा कमलैः अभिरामा अथवा कस्य मलः–कमलः तेन अभिरामा जलपङ्कवती जलपङ्केन अभिरामा । स्त्री०पक्षे परमहसा इव सन्यासिनी इव, केऽपि आत्मनि, परब्रह्मणि वा अपि तत् तद् उचित सपादयन्ती–संपन्न कुर्वती, नदीपक्षे केऽपि जलेऽपि तत् तद् उचितं परमहसाः परमाः उत्तमाः हसाः यस्या सा परमहसा राजहसयुक्ता सती अथवा परमहसे राजहसे वके वके अपि तत् तदुचितं संपादयन्ती नदी । अत्र वबयोः साम्येन 'वके' इत्यनेन 'वके' वोध्यम् । स्त्री०पक्षे समूलम् उन्मूलित कुलकूलं जनकुलकूलं यया सा समूलोन्मूलितकुलकूला, अत्र कूल तदा मर्यादा इति यावत्. नदीपक्षे अपि तादृशी एव । अत्र कूल नाम तटः नदीपटः वोद्धव्यः ।

'अविश्वासप्रवाहा' नद्या. प्रवाहः कदा कथ जन नागपथ नेष्यति इत्येवं न विश्वसितु योग्यः, अतः अविश्वासः विश्वासरहित' प्रवाहो यस्याः सा । स्त्रीजातिर्न विश्वसितु योग्या इत्येवं स्त्रीचरितविज्ञानकुशला. केचित् मन्यन्ते अत. स्त्रीजातिः अपि अविश्वासप्रवाहा विश्वासरहितः प्रवाहो यस्याः सा । 'प्रवाह'पदम् अत्र 'व्यवहार'अर्थसूचकम्, "प्रवाहो व्यवहार-अम्बुवेगयोः" [–है० अनेका० का० ३, श्लो० ८१० ]

१. [ दिवसपतिः आदित्यः, पूर्वा प्रथमभार्या विमुच्य, अपरा द्वितीया, याति सेवते सन्ध्याया तु तृतीयभार्यायां कृतः रागभरः अनुरागप्रसरो येन स तथा । रविमेव पुरुषान्तर न पश्यति तस्मिन् स्वावागतं न नश्यति, तदपि सदोषा रजनी निगद्यते इति सूर्यस्य पुरुषत्वात्न कोऽपि दोषं ददाति, रजनी तु स्त्रीत्वेन न लभते । अथ च पूर्वा प्राची, अपरा च पश्चिमा दिक् सध्यायामभ्रराग', सदा नित्यम्, रजनी 'उषा' अभिधात, अन्येप स्पष्टम् । अग्रेतन तावत् स्पष्ट यावद्धि विशालनयना इत्यादि । ]

२. रविरूपं पुरुषान्तरं रजनी न पश्यति, इयदेव न किन्तु रवौ आगते या नश्यति अपि, एतादृशी पतिपरायणाऽपि रजनी सदोषा निगद्यते ।

1 वा न तदपि ल । 2 यथाचरितेऽपि डे । 3 °स्पेऽपि व° ख । 4 °वृत्ते न प्र° खल ।

शुद्धाशयः कुटिलता न खलस्य वेत्ति
शुद्धाशयत्वमखलस्य खलोऽपि नैव ।
अज्ञानमूढहृदयः सुजन. खलो वा
स्वात्मानुरूपमखिल कल्यत्यवश्यम् ॥१८६॥
प्रियवदाऽपि सत्याऽपि वल्लभाऽपि हिताऽप्यहो ! ।
न भार्या बान्धवस्थाने कुलीनस्य कथञ्चन ॥१८७॥

अप्रतिपन्ने[1]ऽथ मदीयवचने मामेवाकुलीनामलीका वा कलयिष्यति । ततो दग्धोपरि[2] स्फोटकोद्भवोऽयम् । प्रतिपन्नेऽपि वा न परिणामसुन्दरमिदम् । यतः, प्रथमजलधरधारा-धोरणीसमुल्लासितावस्करेणेव तरङ्गिणी मम वचनश्रवणेन ध्रुव युवराजचेतोवृत्ति कलुषा भविष्यति। [3]तस्मात् तन्निमित्तो राग-द्वेषपराधीनात्म[4]नोस्तयो. द्वयोरपि स कोऽपि विश्लेषो भविष्यति । यः [1]कठिनश्लेप इवानवच्छिन्नवैरस्य कारण भूत्वा कस्य कस्य न महादु.खहेतुतया संपत्स्यते । ततः सत्यमिद व्याहृताद्व्याहृत श्रेय इति। कथमन्यथा त्रिभुवनगुरुणा भग[2]वता तीर्थकरेणापि राज्यं सान्तःपुरमप्यपहायानुत्पन्नज्ञानेन पुरस्कृतोऽय वाक्सयम. । तदज्ञानगोचरेऽर्थे प्राणि-नामेक मौनव्रतमेव परमो बान्धवो वा सुहृद् विभवो वा [3]नवाऽधिको निधिर्वा ततः कारणात् सर्वथा गजनिमीलिकैव तावदौ[5]चित्यमञ्चतीति न किञ्चिदाख्याति स । तथापि तदागमनशङ्कया राहुघटनयेव दि[6*]नकरप्रभा, दिनकरप्र[7*]भयेव चन्द्रचन्द्रिका, चन्द्रचन्द्रिकयेव प्रदीपशिखा, प्रदीपशिखयेव माल्तीमाला सा बाला विच्छायकाया य[8]दृच्छया नाहारयति शरीराधारम-प्याहारम्, न वध्नाति सकलालङ्कारसारमपि मुक्ताहारम्, न बहु मन्यते सपादि[9]तरुचिरशरीर-परभागमप्यङ्गरागम्, नाद्रियते परिपोपिताऽशेपभूषणानुलेपनश्रीविशेपमपि दिव्य वेषम् । किमपरम्, विरचितरुचिरनयनाञ्जनरेखा भालतलकलिततिलकविशे[4]षा [10]न वीक्षती(ते) प्रदत्त-

१. [ नवर कठिनश्लेपो विरसस्य नीरसस्य भावो वैरस्यम्, अथ च वैरस्य वैरिभावस्य कारणम् । ]

२ अत्र ' भगवता महावीरेण वीतरागभावप्राप्तेः पूर्व वहुशः मौन स्वीकृतम् आसीत् ' इत्येषा भगवत' प्रतिज्ञा निदर्शिता ।

३. नवाधिको निधिः नवनिधयः प्रसिद्धाः, मौनव्रत तु ततोऽपि अधिको निधिः इति भावः ।

४. [ मदनरेखा । ]

1 °पन्ने म° ख, °पन्नेव (वा) म° ल। 2 °रि पिटकोद्भेदोऽयम् खल। 3 तस्मान्निमि° खल । 4 °त्मनोद्व° ख । 5 °चितीति खल । 6 ** एतच्चिह्नान्तर्गतः पाठो निर्गलितः डे आदर्शे । 7 प्रभयेव प्रदीप° ख । 8 'यदृच्छया' इति पदं नास्ति खल आदर्शयोः । 9 °दितशरीररुचिप° डे, °दितशरीररचिरप° ल । 10 नेक्ष्यते (नेक्षते) प्र° डे ।

सद्ध्यानावरण त्रपापहरण पापप्रपापूरण
धिक् कष्ट परदारवीक्षणमपि न्याय्य कुलीनस्य किम् ? ॥१७९॥

ततो महात्मन् ! पारिणामिकीं बुद्धिमवमन्यमानः किमापातरमणीयेष्वपि किम्पाकपादप-फलेष्विव, हालाहल[1]कवलितेष्विव महाभुजङ्गभोगेष्विव, दुर्जनसङ्गतेष्विव परिणामदारुणेषु वितनोषि बहुमान विषयसुखेषु ।

विरम विरम व्यर्थारम्भादितो निजकुग्रहात्
कुरु कुरु वचस्तथ्य पथ्य मयाऽप्युदित स्त्रिया ।
प्रभवति यथा मूर्ति कीर्ति. कलङ्कसमुज्झिता
तव धवलता[2] नेतु सर्वा. सतीश्च दिशोऽपि च ॥१८०॥

. किञ्च,

दु[3]र्गन्धाऽमेध्यपूर्ण किमिदमपि न भो मूत्रपात्र न कि वा
[4]कि वाऽसृग्-मास-मेदो-ऽस्थिचयम[5]यमिद कि न चर्मावृत वा ।
शेष[6]स्त्रीभ्यो विशेषः क इव वपुषि मे वीक्षितो वा श्रुतो वा
हित्वा स्वस्त्री पणस्त्रीरपि यदिह महामूढगाढो ग्रहस्ते ॥१८१॥

दत्त्वा च[7] कर्ण समाकर्णय निर्णयम्, किमिह बहुभाषितेन ? ।

तातस्त्व तनयाऽस्म्यह तदिह नौ सम्भोगरङ्ग. कथ
यज्ज्येष्ठस्य सहोदरप्रियतमा नान्या निजाऽपत्यत. ।
दुर्गन्धापयशोऽन्धकूपकुहरे कस्मात् पतित्वा तत
कुम्भीपाककदर्थना प्रति मुहु सोढु समीहा तव ? ॥१८२॥
वृत्तान्तस्तव सोदरेण विदितो यद्येष पापद्विपा
तत् त्व[1] नासि न चाहमस्मि न सन्त्यैता वरा[8]क्य. प्रजाः ।
स्तोकाय प्रलय नयन्निदमहो ! विश्वं ध्रुव की[2]लिका-
हेतोर्देवकुलस्य चालनमि[9]हाऽब्रह्मन्नुपक्रान्तवान् ॥१८३॥

१. त्व न असि, अह च नास्मि, ऐताः वराक्य प्रजा. न सन्ति, 'सन्त्यैताः' इति अत्र साधनमेवम्—आ + इताः—एता मर्यादया प्राप्ताः समक्षम् उपस्थिताः । पुनश्च आ + एताः ऐता । आ अभिविधिना समन्तात् प्राप्ताः समग्रा इत्यर्थ । अत्र आ + एताः इत्यत्र सन्धौ ऐताः ततश्च सन्ति + ऐताः—सन्त्यैता इति साधु' ।

२. कीलिकाहेतोर्देवकुलस्य चालनम्' इत्येष हि लौकिको न्यायः ।

1 °लमवलेष्विव ख । 2 धवलिना ख । 3 दुर्गन्ध मे° डे । 4 किं नासृग् ल । 5 °यमद किं खल । 6 शेष स्त्रीणा तनुभ्यो वपुषि मम गुणो वीक्षित' कः श्रितो वा खल । 7 'च' पद नास्ति डे आदर्शे । 8 वराका. प्रजाः डे । 9 °मिहोऽविद्वन्नु° डे ।

मम हृदि यदि वज्राङ्गी न भवसि तत्[1] त्वमसि सुभ्रु ! वज्राङ्गी ।
हन्ति हतको हताशो हहा हहा मामनङ्गोऽयम् ॥१८४॥

इति प्रलपन्नेव तदनु तनुमात्रमपि कदाग्रहतानवमनासादयन्नेव दैवहतमतिः सोदरेऽपि सञ्जातद्रोहपरिणतिरापूर्य पूयहृदयम्[3], अधिकीभूतया महाकलुषितयेव कलिता मलिना मुखच्छायां बिभ्राणः, कवलितेनेव खादिराङ्गारैः, तक्षितेनेव सर्वतः कृपाणैः, आलीढेनेव कपिकच्छूबीज-कोशीभिरतीवदोदूयमानेन, तामेव मदनरेखामनुवर्त्तयितुमिव सहानागतेन मनसा शरीरमात्रेण ययावावासम्[4] ।

मदनरेखा तु तृतीयज्वर इव तस्मिन्नागत्य गते मनागुच्छ्वसिताऽपि पुनरागमनभये[5] प्रकम्पमानमानसा चेतसीद चकार—

धिक् कष्टम्, निर्लक्षणेयमतीव स्त्रीजाति, यत पापीयसी तथा कथञ्चिदतितरां सदम्भा[6] नदीव घटिता—यथा असावमृतपदमपि, कुलिनाऽपि, धीवरोचिताऽपि, विस्तारितरङ्गाऽपि, कमलाभिरामाऽपि, किं बहुना ? सपादयन्त्यपि परमहसे-व-केऽपि तत्तदुचित[7] समूलोन्मूलितकुल-कूलेव[8] प्रतिकूलत्वकलितेव[10] ध्रुवमविश्वासप्रवाहैव[11] साधुभिरपि निन्दनीया वर्तते । तथाहि—

कलयति यदि कुन्देन्दूपमानं सतीत्व
वदति च यदि सत्य सर्वसत्त्वानुकूलम् ।
त्यजति यदि परेषां वस्तु चामेध्यबुद्ध्या
तदपि युवतिजातिर्निन्द्यते दैवदग्धा ॥१८५॥

१. 'वज्राङ्गी' वज्रवत् कठोरम् अङ्ग यस्याः सा ईदृशी त्व न भवसि कठोरा न भव इति भावः । हे सुभ्रु ! त्व वज्राङ्गी "वज्रा तु अमृता" [-है० अनेका० का० २, श्लो० ४६५] इति वचनाद् वज्रा अमृता लता तद्वत् कोमलम् अङ्ग यस्याः सा ईदृगी त्वमसि, मम हृदये त्व कोमलाङ्गी असि, अत एव अनङ्गो मा हन्ति इति आशयः ।

२ कदाग्रहतानव कदाग्रहतनुताम् ।

३ तया मदनरेखया पूर्यहृदयम्, आपूर्य भृत्वा इति ज्ञेयम् । 'पूर्वहृदयम्' अत्र यदि 'पूयहृदयम्' इति पाठः स्यात् तदा विशेषतः समुचितः । पूय दुर्गन्धि दुर्वृत्तेन राज्ञो हृदय पूय दुर्गन्धि जातम् इति आशयः ।

४ [('सन्मार्गस्खलनम्' इत्यतः) अग्रे तावत् स्पष्ट यावत 'पापीयसी' इत्यादि । सदम्भा–सकपटा, पक्षे शोभनाम्भःसहिता । अग्रे स्त्रीजातिपक्षे अमृतस्य–मोक्षस्य पद तद्गामित्वात् । कुलीना–कुलजा, धिया–बुद्ध्या वराणाम् अर्थात् सुशीलस्वसतीनाम् उचिता–योग्या । विस्तारितो रङ्गो यया सा तथा, कमलावत्–लक्ष्मीवद् अभिरामा । परमह–परमोत्सव, तत्तद् उचित सेवकेऽपि सपादयन्ती । नदी तु अमृतानामविष्ठायकदेवाना पदम् । कौ–पृथिव्या लीना, धीवराणा–कैवर्त्तानाम्

1 'तत् त्वमसि' इति पाठो नास्ति डे आदर्शे । 2 °रापुर्याप्य डे । 3 त एव ख । 4 वावासाम्(न्) खल । 5 °भयेन प्र° डे । 6 °सावग्यमृ° डे । 7 °दुपचित डे । 8 °लोन्मूलोन्मू° ख । 9 °कूलेव डे । 10 °लितेव डे । 11 °हैवैवेति सा° डे ।

दिवसपतिर्विमुच्य[1] पूर्वामपि यात्यपराम् । अथ च स पूज्य एव सन्ध्याकृतरागभर , रविपुरुपान्तर न पश्यति, अपि नश्यति वा तदपि निगद्यते सदोषा रजनी हि जनैः । ततः प्रत्यक्षीकृतेऽपि स्वलोचनाभ्या मया स्वयमेव प्रतिपद्यमाने यथावस्थितेऽपि भूपतिस्वरूपे वञ्चकत्वादिदोषप्रवादाधारतया हतकस्य युवतिवर्गस्य, निरवधितया वान्धवपक्षपातस्य स्वच्छाशयतया निजचित्तवृत्तेर्न प्रत्येष्यति युवराजः । यत.—

उचिता । विस्तारिणस्तरङ्गाः यस्या सा तथा । कमलैः–पद्मैः अभिरामा । परमहसे–राजहसे वकेऽपि तत्तदुचित सपादयन्ती ।]

सदम्भा–सकपटा स्त्रीजातिः, पक्षे विद्यमानजला नदी । असौ स्त्रीजातिः अमृतपदम्–आत्मपूर्णतायाः स्थानम्, असौ नदी अमृतपदम्–जलस्थानम् । स्त्री०पक्षे कुलीना–कुलमर्यादावती, नदीपक्षे कुलीना–पृथिव्या लीना । स्त्री०पक्षे धीवरोचिता–धीवराणा बुद्ध्या बृहस्पतीनाम् उचिता, नदीपक्षे धीवरोचिता धीवराणा–कैवर्ताना–मत्स्यग्राहिणाम् उचिता । स्त्रीपक्षे विस्तारितरङ्गा–विस्तारितः रङ्गः–रागः नृत्य वा यया सा, नदीपक्षे विस्तारितरङ्गा–विस्तारिणः तरङ्गाः यस्याः सा । स्त्री०पक्षे कमलाभिरामा कमलया–लक्ष्म्या अभिरामा वा, कमला इव–लक्ष्मीरिव अभिरामा–सुन्दरा, नदीपक्षे कमलाभिरामा कमलैः अभिरामा अथवा कस्य मलः–कमलः तेन अभिरामा जलपङ्कवती जलपङ्केन अभिरामा । स्त्री०पक्षे परमहसा इव संन्यासिनी इव, केऽपि आत्मनि, परब्रह्मणि वा अपि तत् तद् उचित सपादयन्ती–सपन्न कुर्वती, नदीपक्षे केऽपि जलेऽपि तत् तद् उचित परमहसाः परमाः उत्तमाः हसाः यस्या सा परमहसा राजहसयुक्ता सती अथवा परमहसे राजहसे वके वके अपि तत् तदुचित सपादयन्ती नदी । अत्र ववयोः साम्येन 'वके' इत्यनेन 'वके' वोध्यम् । स्त्री०पक्षे समूलम् उन्मूलित कुलकूल जनकुलकूल यया सा समूलोन्मूलितकुलकूला, अत्र कूलं नद्य मर्यादा इति यावत्, नदीपक्षे अपि तादृशी एव । अत्र कूल नाम तट नदीपट वोद्धव्यः ।

'अविश्वासप्रवाहा' नद्याः प्रवाहः कदा कथ जन नागमयं नेष्यति इत्येवं न विश्वसितु योग्यः, अत अविश्वासः विश्वासरहितः प्रवाहो यस्याः सा । स्त्रीजातिर्न विश्वसितु योग्या इत्येव स्त्रीचरितविज्ञानकुशलाः केचित् मन्यन्ते अतः स्त्रीजातिः अपि अविश्वासप्रवाहा विश्वासरहितः प्रवाहो यस्या. सा । 'प्रवाह' पदम् अत्र 'व्यवहार' अर्थसूचकम्, "प्रवाहो व्यवहार-अम्बुवेगयोः" [–है० अनेका० का० ३, श्लो० ८१० ]

१. [ दिवसपतिः आदित्यः, पूर्वा प्रथमभार्या विमुच्य, अपरा द्वितीया, याति सेवते सन्ध्याया तु तृतीयभार्याया कृत. रागभरः अनुरागप्रसङ्गो येन स तथा । रविमेव पुरुपान्तर न पश्यति तस्मिन् स्वागतं न नश्यति, तदपि सदोषा रजनी निगद्यते इति सूर्यस्य पुरुपत्वात्न कोऽपि दोषं ददाति, रजनी तु स्त्रीत्वेन न लभते । अथ च पूर्वा प्राची, अपरा च पश्चिमा दिक् सन्ध्यानामभार्या, सदा नित्यम. रजनी 'उषा' अभिधान, यशेष स्पष्टम् । अग्रेतन नाम स्पष्टं यादि [illegible] इत्यादि । ]

२. रविरिव पुरुषान्तरं रजनी न पश्यति, इत्येव न किन्तु रवौ आगते या नश्यति अपि, तादृशी [illegible] रजनी सदोषा निगद्यते ।

1 पा म र्पतिं म । 2 यथाव[illegible]तेऽपि इ । 3 [illegible]पेऽपि व [illegible] । 4 [illegible]चे न प्र[illegible] स्खल ।

शुद्धाशयः कुटिलता न खलस्य वेत्ति
शुद्धाशयत्वमखलस्य खलोऽपि नैव ।
अज्ञानमूढहृदय. सुजन. खलो वा
स्वात्मानुरूपमखिल कलयत्यवश्यम् ॥१८६॥
प्रियवदाऽपि सत्याऽपि वल्लभाऽपि हिताऽप्यहो ।।
न भार्या बान्धवस्थाने कुलीनस्य कथञ्चन ॥१८७॥

अप्रतिपन्नेऽथ[1] मदीयवचने मामेवाकुलीनामलीका वा कलयिष्यति । ततो दग्धोपरि[2] स्फोटकोद्भवोऽयम् । प्रतिपन्नेऽपि वा न परिणामसुन्दरमिदम् । यतः, प्रथमजलधरधाराघोरणीसमुल्लासितावस्करेणेव तरङ्गिणी मम वचनश्रवणेन ध्रुव युवराजचेतोवृत्ति कलुषा भविष्यति। [3]तस्मात् तन्निमित्तो राग-द्वेषपराधीनात्[4]मनोस्तयोः द्वयोरपि स कोऽपि विश्लेषो भविष्यति । यः [1]कठिनश्लेष इवानवच्छिन्नवैरस्य कारण भूत्वा कस्य कस्य न महादु.खहेतुतया सपत्स्यते । ततः सत्यमिद व्याहृतादव्याहृत श्रेय इति। कथमन्यथा त्रिभुवनगुरुणा भग[2]वता तीर्थकरेणापि राज्यं सान्तःपुरमप्यपहायानुत्पन्नज्ञानेन पुरस्कृतोऽय वाक्सयम. । तदज्ञानगोचरेऽर्थे प्राणिनामेकं मौनव्रतमेव परमो बान्धवो वा सुहृद् विभवो वा [3]नवाऽधिको निधिर्वा ततः कारणात् सर्वथा गजनिमीलिकैव तावदौ[5]चित्यमञ्चतीति न किञ्चिदाख्याति स्म । तथापि तदागमनशङ्कया राहुघटनयेव दि[6*]नकरप्रभा, दिनकरप्र[7*]भयेव चन्द्रचन्द्रिका, चन्द्रचन्द्रिकयेव प्रदीपशिखा, प्रदीपशिखयेव माल्तीमाला सा बाला विच्छायकाया [8]यदृच्छया नाहारयति शरीराधारमप्याहारम्, न वध्नाति सकलालङ्कारसारमपि मुक्ताहारम्, न बहु मन्यते सपादि[9]तरुचिरशरीरपरभागमप्यङ्गरागम्, नाद्रियते परिपोषिताऽशेषभूषणानुलेपनश्रीविशेषमपि दिव्य वेषम्। किमपरम्, विरचितरुचिरनयनाञ्जनरे[4]खा भालतलकलिततिलकविशेषा [10]न वीक्षती(ते) प्रदत्त-

१. [ नवरं कठिनश्लेषो विरसस्य नीरसस्य भावो वैरस्यम्, अथ च वैरस्य वैरिभावस्य कारणम् । ]

२. अत्र 'भगवता महावीरेण वीतरागभावप्राप्तेः पूर्व बहुश मौन स्वीकृतम् आसीत्' इत्येषा भगवतः प्रतिज्ञा निदर्शिता ।

३. नवाधिको निधिः नवनिधयः प्रसिद्धा., मौनव्रत तु ततोऽपि अधिको निधिः इति भावः ।

४ [ मदनरेखा । ]

1 °पन्ने म° ख, °पन्नेव (वा) म° ल। 2 °रि पिटकोद्भेदोऽयम् खल। 3 तस्मान्निमि° खल। 4 °त्मनोद्व° ख। 5 °चितीति खल। 6 *-* एतच्चिह्नान्तर्गतः पाठो निर्गलितः डे आदर्शे। 7 प्रभयेव प्रदीप° ख। 8 'यदृच्छया' इति पदं नास्ति खल आदर्शयोः। 9 °दितशरीररुचिप° डे, °दितशरीररुचिरप° ल। 10 नेक्ष्यते (नेक्षते) प्र° डे।

प्रियतमाऽऽनन्दमुखमुकुरतलप्रतिफलित निजमपि मुखम् । केवल राजकुले वा देवकुले वा क्रीडाचले वा राजपाटिकायां वा प्रमदवनदीर्घिकायां वा युवराजस्य महीपतेः सकाशादनिष्टमाशङ्कमाना कवलितकालकूटकवलेव तुच्छेतरमूर्च्छाविकलेव मृतेव तावदास्ते, यावल्लोचनपथचारी न भवति कुमार. । लोचनपथचारिणि तु तत्रास्वादितामृतेव निवृत्तमूर्च्छेव प्रत्युज्जीवितेव लब्धनिधानेव समधिगतराज्येव सञ्जातपुत्रेव संपद्यत इति । व्रजति च काले कदाचित् सा सुमुखी सुखशय्यातलप्रसुप्ता प्रवर्तमाने प्रमोदभेदाभिरामे रजनिविरामे निर्धूतप्रभूतदोपान्धकारं जिनचन्द्रमिव परिपूर्णचन्द्र स्वप्ने ददर्श । अपगतनिद्राव्यापारा च स्मृतपरमेष्ठिपञ्चनमस्कारा ययावन्तिक युवराजस्य ।

तेनापि तत्कालप्रवुद्धेन मरुदेवीव [1]विशालनयनाभिरमणीया, मन्दोदरीव निष्कलङ्कैकभूषणम्, राजीमतीव सर्वदा नेमितरङ्गितरागातिशया समालोक्य समुचितासने चोपवेश्य सानन्दमनुयुक्ता ।

प्रिये ! कथय किमिहागमनप्रयोजनम् ? । तया पुन. प्रभातसन्ध्ययेव विकस्वरवदनारविन्दया मधुकरमधुरध्वनिना विज्ञप्तः स्वप्नवृत्तान्तः ।

युवराजोऽपि तदाकर्णनप्रादुर्भवदमन्दानन्दाविरलपुलकवशकदम्वकुसुमायमानकाययष्टिः स्पष्टमुवाच—प्रिये ! धन्याऽसि, कृतपुण्याऽसि, सुलब्धजन्माऽसि, सुलक्षणाऽसि, यस्यास्तदावेदकः प्रागेव देव इव निसर्गत एव दूरोज्झितकुसङ्गति. सुरसभावहितमतिः श्रुतावधि-

१. [ विशालनयो 'हा'कारादिनीतिप्रयोजनकत्वात्, यो नाभि', आदिजिनपतिता ( पतिपिता ) तेन रमणीया मरुदेवी, निष्कस्य सुवर्णस्य या लङ्कापुरी तस्याः एक भूषण मन्दोदरी । सर्वदा नित्यम्, नेमौ नेमिनाथे, तरङ्गितरागा राजीमती । मदनरेखापक्षमाह—विशालनयनैर्दीर्घलोचनैः अभिरमणीया, निष्कलङ्काना कलङ्करहिताना मानवानाम् । एक भूषणम् । सर्वदाने सर्ववितरणे, अमित प्रचुर या यथा भवति, एव तरङ्गितः प्राप्तो रागातिशयो यस्या सा तथा । ]

२. [ देव इवेत्यादि—देवो हि उज्झिता, कोः पृथिव्याः संगतिः येन चतुरङ्गुलमस्पृष्टभूमित्वात् सुरसभाया सुरसदसि, अवहिता सावधाना मतिर्यस्य स तथा । श्रुतावध्योः श्रुतज्ञानावधिज्ञानयोः समृद्धिशाली, नन्दने नन्दनवने एकाऽद्वितीया रतिर्यस्य स तथा । चन्द्रयशाः कुमारस्तु उज्झितकुसगतिः त्यक्तकुसंसर्गः । सुष्ठु शोभनेभ्यो रसेभ्यः शृङ्गारादिभ्यो भावेभ्यो रत्यादिभ्यो हिता मतिर्यस्य स तथा । श्रुते शास्त्रे या अवधिः समृद्धिः सावधाननिष्ठा तया शालते इत्येवशीलः । सतामानन्दनाय एका रतिर्यस्य स तथा । ]

अवधिः अवधान तदेव समृद्धिः ।

३ [ श्रुत्या सगत्या सगतः शास्त्राविरुद्धो नयः नीतिर्येषा तेषा नराणामुचितं सुप्रभुप्रभावम् । श्रुतिसगते कर्णान्तविश्रान्ते ये नयने ताभ्या शोभितम् आस्यकमलम् । सश्रीषु श्रीसहितेषु धनु-

1 °मुख मु° डे, °मुखरमु° ल । 2 °काया प्र° ख । 3 °चारी भवति खल । 4 'विशाल' पद नास्ति डे आदर्शे । 5 °ती स° डे । 6 °चिते चासने चोपविश्य डे । 7 यस्यास्तव तावदेकः ख ।

समृद्धिशाली सदानन्दनैकरतिः सञ्जात. प्रशस्तनयश्चन्द्रयशास्तनयः साम्प्रत पुनरपरस्ततोऽपि पराक्रमेण विनयेन, नयेनाधिपत्येन मूर्त्या कीर्त्याऽपि समधिकः पुत्रो भविष्यति, यादृगस्माक सन्ततावपि न बभूव ।

मदनरेखा तु तद्वचनतस्तथा स्वमनसि तुतोष यथा तत्क्षणादेव वपुषि समधिका कान्ति पुपोष। ततः प्रभृत्येव च नयेऽनवच्छिन्ने प्रवर्तमानेऽवनीपते राज्ये इव गर्भे प्रवर्द्धमाने वपुरस्याः सर्वाङ्गसुन्दरमजायत। तथाहि— सुप्रभुप्राभवमिव श्रुतिसंगतनयनरोचितमास्य-कमलम्। कुप्रभुप्रभुत्वमिव सश्रीकोपचयकलितयोन्नत्याऽलङ्कृत कुचयुगलम्। पारदरसच्छुरित-काञ्चनमिव पाण्डुभावमभजत कपोलतलम्। भव्यस्य समुत्पन्नविवेकस्य दुर्नयमतिरिव मन्दाऽपि मन्दतरतामगमद् गतिः। कि बहुना ?—

> यदानन्दस्थान यदभिमतमस्याः स्वमनसो
> यदुल्लास जातेर्जनयति यदाप्तप्रियकरम्।
> यदेव प्राय. स्यादुभयकुलयोरुन्नतिपद
> शिशौ गर्भस्थेऽस्यास्तदखिलमभूदद्भुतमिति ॥१८८॥

सततानन्दसपदापास्तसमस्तविषादतया विस्मृतनरेन्द्रशङ्काऽपि प्रथमसमितिसमितयतिरिव पथ्यासक्तचित्तया सर्वथा निरातङ्काऽपि सुविशुद्धपक्षमुख्यलेखेवामृतमयूखस्य तनोस्तानवमतीव बिभ्राणा प्राणप्रिया समालोक्य युवराजेनापृच्छ्यत— प्रिये! कथय किमपचयकारण शारीरिक मानसिक वा यदेवभूता भवतीमालोकयामि कि तवापि किञ्चिदपरिपूर्णम् ? ।

ततस्तयोक्तम्— नाथ ! जानेऽह यदि जिननाथप्रतिमानामप्रतिमानामर्चा निर्वर्तयामि।

(नि)ष्वित्यर्थः, विषये यः कोपचयः क्रोधवृद्धिस्तेन कलितया उन्नत्या उच्छ्रयेणालङ्कृतं कुप्रभुप्रभुत्वम्। अथ च सश्रीकेण सशोभेन उपचयेन काठिन्येन कलितया उन्नत्याऽलङ्कृत कुचयुगलम् अग्रेतन स्पष्टम्। ]

कुप्रभुर्हि कुत्सितो भूपाल', स च सश्रीके जने सधने जने श्रीमति जने तद्धनापहरणाय कोप करोति इति सुप्रसिद्धम्।

१. पारदरसेन चाकचिक्यप्राप्त सुवर्ण पाण्डुवर्ण भासते इति तदुपमानमत्र ।

२. [ अग्रे ईर्यासमितो यतिः, पथि मार्गे, आसक्तचित्तः सावधानमनाः भवति। मदनरेखा तु पथ्ये हितभोजनादावासक्तचित्ता। ]

३. शुक्लपक्षो हि सुविशुद्धः पक्षः। तस्मिन् पक्षे अमृतमयूखस्य चन्द्रस्य या मुख्या लेखा द्वितीयायाः तिथेः चन्द्ररेखा ।

४. [ अग्रे जिनप्रतिमानाम् अप्रतिमाना निरुपमाणाम् । ]

1 विनयेनाधि° खल। 2 नये व(वा)ऽनव° ल, नयेऽच्छिन्ने ख। 3 °भुप्रभाव° डे। 4 °रदच्छु° डे। 5 °स ज्ञाते° ख। 6 °पास्तवि° डे। 7 तनौ तान° डे।

जाने यदि सकलसत्त्वानामसत्त्वानामपि[1] पटहप्रदानपूर्वकमभयप्रदानघोषणा कारयामि । जाने यद्यात्मानुग्रहबुद्ध्या पवित्रचारित्राणा मुमुक्षूणामुचितमुपष्टम्भमहरहः करोमि । जाने यदि जिनेन्द्रचन्द्राणा कथाः प्रमोदप्रथा. समाकर्णयामि । तदेतदखिलमबलाना राजकुलबालिकानामपि प्राणनाथप्रसादेनैव [2]संपनीपद्यते । [3]शालीनतया पुनरह स्वयमाख्यातुमपारयन्ती तदेनामवस्थां गताऽस्मि ।

युवराजेन तु तद्वचनानन्तरमेव[1] समस्तं[2] सविशेष सपादयांचक्रे ।

पतिव्रतानामनुकूलदक्षक्षमक्षमा वल्लभवल्लभानाम् ।
प्रायेण यत् सिद्ध्यति तन्न चिन्तामणि कराब्जे[3] खलु बिभ्रतीनाम् ॥१८९॥

[4]न तया बहुशोभया न को महिमा चैत्यगृहेषु कारितः ।
नतया बहुशोऽभयाऽऽनको दयया कस्य मुदे प्रदापित· ? ॥१९०॥

[5]सत्योदयामृतै. पूर्णा नार्या-वर्जनतत्पराः ।
अपूज्यन्त तया नित्य तपस्विन्यस्तपस्विन. ॥१९१॥

---

१. [ अग्रे सत्त्वाना जीवानाम् असत्त्वाना सामर्थ्यरहितानाम्, शेष स्पष्टम् । ]
असत्त्वानामपि सत्त्वरहितानामपि दुर्बलतमानामपि, अथवा सत्त्वगुणरहितानामपि तामसिकाना राजसिकाना वा सत्त्वानाम् ।

२. सपनीपद्यते 'सम्'पूर्वकस्य 'पद'धातोः यङन्त रूपम्, पुनः पुनः अथवा भृशं सपन्न भवति ।

३. लज्जाशीलतया । "स्याद् अधृष्टे तु शालीनः" [ – अमर० का० ३, वर्ग २१, श्लो० २६ ]

४. [ नतयेत्यादिवृत्ते–बहु प्रभुता, शोभा मनोहरत्व यस्याः सा तथा, तया मदनरेखया नतया प्रणतया । को महिमाविशेषः । चैत्यगृहेषु जिनायतनेषु न कारितः किन्तु कारित एव । बहुशः बहुप्रकारम्, [अभयानकः] अमारिघोषपटहः, कस्य मुदे सर्वस्य हर्षहेतुः, दयया कृपया न प्रदापितः, अपि तु प्रदापित एव । ]

तया बहुशोभया को महिमा चैत्यगृहेषु न कारित इति न, किन्तु सर्व एव महिमा कारित । नतया नम्रया, बहुशः बहु प्रकारैः, अभयानक अभयपटह अमारिघोषः कस्य मुदे न दापित ? किन्तु अपक्षपातवृत्त्या सर्वेषामेव जीवाना मुदे अमारिघोषः प्रदापितः । "आनक पटहः" [–अमर० का०१, नाट्यवर्ग ७, श्लो० ६ ] अभयस्य आनकः अभयानकः । 'अभयानक'पदं 'भयानको न' इत्येवम् 'अभयरूपः' इत्यर्थस्यापि सूचक बोध्यम्, तच्च आवृत्त्या अमारिघोषस्यापि विशेषणं कर्तुं समुचितम् ।

५. [सत्योदयेत्यादिश्लोकः—तपस्विन्यः व्रतिन्यः अपूज्यन्त पूजिताः । किंविशिष्टाः ? सत्यः शीलयुक्ताः, दयामृतैः करुणासुधाभिः पूर्णाः । नारीणा श्राविकादिस्त्रीणा धर्मोपदेशद्वारेण आवर्जनतत्पराः

---

1 °न्तमेव ख । 2 समस्तमपि स° खल । 3 कराब्जैरपि वि° खल ।

जलधरमालायामिव निस्सीमधारासारेण[1] वसुधोपचयं पुण्योपचयं देहोपचयं युवराजानन्दोपचयं च निजदोहदं पूरयन्त्या तस्यां[2] क्रमेण रसानामिव मधुररसः भरतखण्डानामिव आर्यावर्तः जीवनिकायानामिव त्रसकायः बाह्यतपसामिव संलीनभावः षण्णामपि ऋतूनां मूर्धाभिषिक्तोऽवतीर्णो जगदानन्दकन्दो वसन्तसमयः ।

हतपरमहिमोल्लासः[2] खरकरसतप्तसकलभूवलयः ।
ऋतुरेष शुचेर्ज्येष्ठादिह राजति दुष्कुमारवत् प्रथमम् ॥१९२॥

इति वदन्तः[3] समागत्य संभूय वयस्याः कुमारं विज्ञापयन्ति स्म—

स्मरमते[3] ! रमतेऽत्र न को नृणां
कुसुमतः सुमतः खलु नापरः ।

व्रतिनस्तु सत्यस्य सूनृतस्य उदया त एवामृतानि तैः पूर्णाः । नार्यां स्त्रियः वर्जनं त्यागस्तत्परा — स्त्रीपरिहारनिष्ठा । शेषं पाठसिद्धम् । ]

दयारूपैः अमृतैः पूर्णाः सतीरूपाः पतिव्रतपरायणाः स्त्रियः अपूज्यन्त । नार्याः वर्जनतत्पराः ब्रह्मव्रतिनः ब्रह्मचर्यपरायणाः "नारीणां श्राविकादिस्त्रीणां धर्मोपदेशद्वारेण आवर्जनतत्पराः तपस्विन्यः" अनेन विशेषणेन टिप्पणकारः साध्वीनामपि उपदेशकयोग्यता व्याख्यात्रीरूपतां सूचितवान् ।

१. आसारेण वेगवता वर्षेण वेगवत्या मेघवृष्ट्या । "आसारो वेगवान् वर्षः" [ अभिधा० का० २, श्लो० ७९ ]

२. [ अग्रे हतपरमेत्याद्यार्या गीतिः । एषः वसन्तऋतुः, हतः नाशितः, हिमस्य शीतस्य उल्लासो येन स तथा । खरकरेण आदित्येन सतप्तं [ सकलं ] भूवलयं यत्र घर्मोद्रेकस्यात्र भावात् स तथा । शुचेः आषाढाद् ज्येष्ठाच्च [ इह ] प्रथमादौ वसन्तो राजति शोभते । दुष्कुमारस्तु हतः परस्य ज्येष्ठभ्रात्रादेर्महिमोल्लासः महत्त्वप्रकर्षो येन स तथा । खरेण कर्कशेन करेण राजदेयभागेन सतप्तं [ सकलं ] भूवलयं यस्य स तथा । शुचेर्ज्येष्ठात् पवित्रात् गरीयसो भ्रात्रादेः सकाशात् प्रथमम् आदित एव राजति ज्येष्ठमुल्लङ्घ्य स्वयं राज्यमिच्छतीत्यर्थः । ]

शोचन्ति पान्था यत्र स शुचिः वर्षाप्रारम्भे प्रवासिनां प्रियावियोगेन शोकमग्नताविधायित्वाद् आषाढो हि मासः शुचिः कथ्यते । शुचेः आषाढाद् ज्येष्ठाच्च, प्रथमम् आदौ पूर्वम् एषः ऋतुः वसन्तसमयः राजति, दुष्कुमारवत् दुष्टराजकुमारवत् । 'हतपरमहिमोल्लासः' 'खरकरसतप्तसकलभूवलयः' इमे द्वे विशेषणे वसन्तस्य दुष्कुमारस्य च । वसन्तपक्षे—हतः परमः हिमोल्लासः शीतकालोल्लासः येन सः हतपरमहिमोल्लासः । दुष्टकुमारपक्षे—हतः परस्य ज्येष्ठभ्रात्रादेः महिमोल्लासः येन स हतपरमहिमोल्लासः । व० पक्षे खरकरैः प्रचण्डतापकारककिरणैः सतप्तं संतापं प्राप्तं सकलं भूवलयं येन स खरकरसतप्तसकलभूवलयः । दु०पक्षे खरकरैः महादुःखकरतीव्रराजदेयभागैः सतप्तं संतापितं सकलं भूवलयं येन स खरकरसतप्तसकलभूवलयः ।

३ [ स्मरमते इत्यादौ स्मरमते कामाभिप्राये, कुसुमतः पुष्पेभ्यः अपरः न सुमतः न प्रतिभात इत्यर्थः । मदन एव तोदनं प्रवयणम् आरा तेन तोदितमानसः प्रेरितचित्तः । शेषं गतार्थम् । ]

1 'हृदपूरणेन पूर' डे । 2 'तस्यां' पदं नास्ति खल आदर्शयोः । 3 वदन्त स' खल ।

मदनतोदनतोदितमानसो
निजगृहे जगृहे न जनो रतिम् ॥१९३॥

ततो युवराजेन राजमानाः सप्रमदाः प्रमदवने विहर्तुमिच्छाम इति तत्र गमनाय प्रसीदतु कुमारो येन मन्मथेनेव सरतिना रममाणेन सरमणीकेन भवता सार्द्धं वसन्त इव वयमपि सनाथाः स्मः ।

ततस्तेषां प्रणयभङ्गभीरुणाऽभिहितं कुमारेण–भवतु, भवतामभीष्टम्, को विरोधः ? प्रिये ! त्वमपि सहिता [1]मयवागच्छेति वदता मदनरेखाऽपि प्रोत्साहयाञ्चक्रे । विजने मणिरथागमन-शङ्कयाऽपि तत्रासितुमात्मनैवानीहया तया । तया च मित्रमाल्या निजेन च परीवारेण पौरसुन्दरीलोचनपुटपीयमानसुधायमानमानातिरिक्तरूपलावण्यः कुमारः [2]क्रमेण प्रमदवनं गन्तुमारब्धः ।

प्रविशन्त[3]ञ्च तमुद्दिश्य पठितं वैतालिकेन मदकलकोकिलकुलकलरवेण कर्णामृतायमानेन त्वामिह कुमार माराकार व्याहरति सहकारः । प्रविष्टमात्रे एव [4]च युवराजे व्याहृतमुद्यान-पालेन–कुमार ! स्मराधारसहकारवीथिकेयम्, क्षोभितमहायतिश्चम्पकलताततिरियम्, अलिकुला-मन्दामोदचन्द्रशालासमारोहणनिःश्रेणिर्बकुलश्रेणिरियं, निरस्तनिदाघातपो द्राक्षामण्डपोऽयम्, जनितसनीमनोज्ञ्यलीकं बहुकदलीकं लतागृहमिदम्, शेषलतागुल्मादि[5]कमपरमपि निजनयन-तामरसनिवेशेन द्विगुणितकुसुमशोभाभिरामं क्रियताम् । किञ्च,

इह [2]रमस्व रम-स्ववनान्तरे
कुरु कुरु क्र[3]मैश्चङ्क्रमणं त्विह ।

हे स्मरमते ! मदनमते ! सुमतः सुष्ठु मतः सुमतः । तोदनस्य भावः तोदनता । मदन-द्वारा जातायाः तोदनता मदनतोदनता, तया उदितं मानसं यस्य स मदनतोदनतोदितमानसः अथवा मदनस्य तोदनं तेन तोदितं व्यथितं मानसं यस्य स मदनतोदनतोदितमानसः ।

१ यद्यपि मदनरेखा गर्भिणी अतः सा क्रीडां कर्तुं वने गन्तुं न प्रोत्साहवती तथापि यदि कुमारः एकाकी वनक्रीडार्थे वने गच्छेत् तदा तत्र प्रासादे विजने एकान्ते एव मदनरेखायाः निवासः स्यात् । अतः एकान्तं दृष्ट्वा यः पूर्वं समागतः कामुको राजा मणिरथः स पुनरपि विजने प्रासादे समागच्छेद् इति आशङ्कया प्रासादे कुमारं विना आसितुम् अनीहया अनिच्छया सा मदनरेखाऽपि कुमारेण सह वसन्ते वनक्रीडार्थे प्रस्थातुम् ऐच्छद् इति आशयः ।

२ 'रम ! स्ववनान्तरे' इत्यपि विभागः । 'हे रम ! हे कान्त ! स्ववनान्तरे स्वकीये वनान्तरे रमस्व–क्रीड' इति आशयः ।

३ 'क्रमेण परिपाट्या चङ्क्रमणं कुरु' इति अथवा 'क्रमाभ्यां पादाभ्यां चङ्क्रमणं कुरु' इति अर्थद्वयमपि सङ्घटते ।

1 मयैवा° डे । 2 °रः प्रमदवनक्रमेण ग° ख, प्रमदवने क्रमेण ग° ल । 3 च समु° ख । 4 'च' नास्ति डे आदर्शे । 5 °दिकं पर° डे ।

इह निधेहि निधेहि विलोचने
मधुकरे कलिकामभिधावति ॥१९४॥
इह हि नृत्यति वल्गति गायति
भ्रमति पौरजन प्रमदोद्धुरः ।
मणिगणाभरणद्युतिदीपिका-
प्रकटिते विशतीह लतागृहे ॥१९५॥

तत. कुमारोऽपि दूर्वाविरलप्रवालतूलिकाकलितसकलसारणीके तटवर्त्मनि चरणचङ्क्रमणमतीवप्रमोदमन्दिरमिति मन्यमान , प्रिये ! पुरो भूयताम् इहभवत्या, अतिरमणीयोऽयमुद्देश इति पुरस्कृतप्रियो भणितुमारब्ध· ।

चारुचम्पकलताऽऽवृतान्तरे
नातपत्रमिह माति यद्यपि ।
मा कृथास्तदपि पाणिपल्लवं
बिभ्यती रविकलान्निजालिके ॥१९६॥
वारितो रविरसौ त्वदानने
यत् क्षिपन् कमलशङ्कया करान् ।
बिभ्रतोपरि पटीमिमां मया
पश्य पश्य मुखमुन्नत कुरु ॥१९७॥

पुरोऽवलोक्य च वकुलमलिसंकुल दर्शयता पठित युवराजेन ।

बकुलकलिकाः स्वस्थानाद् या मृगेक्षणयोच्चिता-
स्तदधरदले लग्न भृङ्गे रुषेव तदुत्थितैः ।

१. सप्तम्यन्तं पदमेतत् । मधुकरे कलिका प्रति अभिधावति सति 'रमस्व रमस्व' इत्यादि योज्यम् ।

२ वल्गति गच्छति वेगपूर्वकं कूर्दते 'कूदे छे' इति भाषायाम ।

३. यथा 'अत्रभवती 'पदम् आदरसूचक तथा 'इहभवती'पदमपि आदरसूचकम् ।

४. बिभ्यती 'भी'धातोः वर्तमानकृदन्तरूपम्, भय कुर्वाणा सती । रविकलात् रविकरात् रविकिरणाद् बिभ्यती । निजालिके निजे अलिके ललाटे । अत्र 'रविकलान्निजालिके' इत्येवम् अनुप्रासार्थं 'रविकरात्' स्थाने 'रविकलात्' इति लकारोच्चारणम् । र-लयोरैक्य तु प्रसिद्धमेव ।

५. इमा पटीं तव उपरि बिभ्रता मया कमलशङ्कया त्वदानने करान् किरणान् क्षिपन् असौ रवि· वारितः इति पश्य पश्य ।

1 का. स्वस्थानं या ल । 2 °रतले डे।

वलयरणित[1] तैतत्त्रासार्थं कृत करधूननैः-
रनुकृतिरिवोड्डीनैरेभिः कृता कृतकूजनैः ॥१९८॥

तदेव मदनरेखया पुनरेवमवकर्ण्यते[2] ।

न[3] वकुलमकुलाली पद्मकिञ्जल्कपिङ्ग-
भ्रमरपरिवृतेयं किन्तु पुष्पायुधेन ।
घटयितुमिह जैनध्यानवज्राङ्किकातो
दलित इषुसमूहश्चिक्षिपेऽङ्गारमध्ये ॥१९९॥

ततोऽस्य[5] श्रवणतः सञ्जातामितपरितोषैरेकहेलयैवाखिलमपि युवराजादिभिरित्थमुदितम्-अहो ! रमणीयम्[6], अहो ! वितर्कितम्[7], अहो[8] ! निरुपमा भणितिः, अहो ! सुललिता[9] वर्णविच्छित्तिः, अहो ! निर्जितद्राक्षारसा मधुरता ।

तदनन्तरमेवम् उदितमुद्यानपालिकया—युवराज ! पश्य पुरतो द्राक्षामण्डपमपीमम्[10], कुमारोऽपि तदानीमेव सपरीवारः प्रविश्य तत्र व्याजहार—

इह[4] द्राक्षारामे सततमभिरामे कृतरति-
र्ध्रुवं नैषा च्छाया वहलबहला किन्तु रजनी ।
न चेद् ते वक्त्रं तरलतरतार प्रियतमे !
प्रियां द्रष्टुं स्वीयामयमिह समागाच्छशधरः ॥२००॥

---

१ तेषां भ्रमगणानां त्रासार्थं यथा मृगेक्षणया रमण्या वलयरणितं करधूननैः कृतं तथैव तस्य वलयरणितस्य अनुकृतिरिव तैः भ्रमरैः उड्डीनैः कूजनं गुञ्जारवरूपं कृतम् इति आशयः ।

२. अवकर्ण्यते श्राव्यते इति भावः ।

३ वकुलस्य मकुलाली, मुकुलाली मुकुलं कुड्मलं कलिका । "कुड्मलो मुकुलो न ना ॥ मुकुले" [—कल्पद्रुको. पृ० २५२, श्लो० ३१, ३२ ]

अस्य पद्यस्यायम् आशयः—पद्मकिञ्जल्कपिङ्गा ये भ्रमराः तैः परिवृता इयं वकुलमकुलाली न, किन्तु कुसुमायुधेन स्वीयः इषुसमूहः घटयितुम् इव (भाषायाम्—'जाणे के घडाववा माटे') अङ्गारमध्ये निक्षिप्त इति प्रतिभासते । कामदेवेन इषुसमूहस्य घटनं किमर्थं क्रियते ? तदुत्तर-दानाय पद्यकारेण एव सूचितम्—जैनध्यानवज्राङ्किका नाम विशिष्टा सुभटरूपा योद्ध्री तया कामदेवस्य इषुसमूहो दलितः भञ्जितः खण्डखण्डीकृतः, अतः तम् इषुसमूहं पुनरपि तादृशे युद्धे व्यापारयितुं स स्वीयम् इषुसमूहम् अङ्गारमध्ये निक्षिप्य घटयति इव इति रूपकम् । खलु लोहमयं त्रुटितं वस्तु पुनर्घटयितुं लोकेऽपि अङ्गारेषु क्षिप्यते एव इति प्रसिद्धम् । पिङ्गो नाम पीतरक्तो वर्णः ।

४. द्राक्षारामे या वहलबहला छाया सा छाया न, किन्तु रजनी, तथा तत्र द्राक्षाराम-मण्डपे मदनरेखाया यद् वक्त्रं न, किन्तु शशधरः चन्द्रः, अतः चन्द्रः स्वीयां प्रियां द्रष्टुं तत्र समागतः इत्येव रूपकम् ।

---

1 °रवक्तृ° डे । 2 °वर्णत डे, वर्ण्यते ल । 3 न च कु° ख । 4 °मिव जै° डे । 5 ततस्तस्य डे । 6 °रेव हे° ख । 7 °णीय वि° ख । 8 अहो महोनि खल । 9 °रमलसु° डे । 10 °पसमम् ख ।

मदनरेखा पुनरनेन प्रियतमोदितेनापि वचनेन ह्रीता वदनमधश्चकार । कुमारेण तु तदाननोन्नमनाय स्पृहयालुना भूयोऽभ्यधीयत—प्रिये ! पश्य पश्य, दमयति बालबकुलकलिकामपि चुम्बति राजचम्पकम्, माधविकामपास्य खलु घटयति मल्ली वपुषि कम्पकम्, सह नवमालिकाभिरपि विलसति ललितसरोरुहे समम्, मलिनप्रकृतिरेष मधुपः खलु गणयति किमपि न क्रमम् ।

चिन्तितं मदनरेखया, नूनमयमपि मणिरथ इव चपलस्वभावः कोऽपि ।

अत्रान्तरे विज्ञप्तं कालनिवेदकेन—

या प्रातः प्रससार दूरमधुना सूर्ये ललाटतपे
छाया पादतले स्थिता स्ववपुषः सकुच्य सकुच्य सा ।
यद्वा पश्यत सोढुमक्षमतमो घर्मं दिनेशोऽप्यसौ
नो चेत् किं प्रतिबिम्बकैतववशाद् मग्नः सरोमध्यतः ॥२०१॥

अपि च,

स्निग्धच्छायापरयुवतये[1] जाततीव्राभिलाषो-
ऽस्मिन्नारामे कथमपि विशन्नातपो नूनमासीत् ।
खण्डं खण्डं कथमपरैरथा[2] सर्वथाऽप्येष कृत्वा
स्थाने स्थाने वरतरुभटैश्चिक्षिपे[3] पत्रखड्गैः ॥२०२॥

इतश्च प्रतिहतयदृच्छाप्रचारः[2] प्रमदवनविहारपरिश्रमजनितपीडाभिः अशङ्कमज्जनोन्मज्जनविहितविलासिनीजनव्रीडाभिः अहमहमिकाप्रस्तूयमानाभिरनवच्छिन्नजलक्रीडाभिरिवाकृष्यमाणेन[3] निजवदनतुहिनकरनिरस्यमानध्वान्तसन्तानसमानमधुकरस्थानदानापराधेनेव निजनिज[4]मूलस्थानलतावितानादवचितैरतुलपरिमलविशालदलरामणीयकगुणेनेव विचित्रविरचनाप्रतिपत्तिपुरस्कृतैः पुनरुचितज्ञताज्ञापनारसिकतयेव स्वशरीरतास्वस्थाननिवेशितैः कुसुमभरैरलङ्कृताना

१ स्निग्धच्छाया एव परयुवतिः स्निग्धच्छायापरयुवतिः तस्यै जाता तीव्राभिलाषः आतपः इत्येवम् अन्वयः । एतादृशं परयुवतितीव्राभिलाषिणम् अत एव व्यभिचारिणम् आतपं ज्ञात्वा तस्य वृक्षपत्रैः खण्डं खण्डं कृत्वा विनाशः कृत इति कल्पना । वृक्षपत्रैः आरामे आतपः खण्डशो विभक्तो दरीदृश्यत एव इति इदं वर्णनम् ।

२ 'प्रतिहतयदृच्छाप्रचारः' इत्येतद् 'उष्णकर'स्य विशेषणम् ।

३ 'आकृष्यमाणेन' इत्येतद् 'समासीदता' इत्येतद् 'आगतवता' इत्येतत् च विशेषणत्रयम् 'अपराह्णेन' इत्यस्य सम्बन्धितम् ।

1 °न्नायात क° खल । 2 °परथा ख । 3 °रुतैश्चि° डे । 4 निजनिजव° डे ।

विलासिनीनां दर्शनार्थमिव समासीदता जनितपरभोगाऽङ्गरागसन्नाहसन्नद्धानामुत्कुण्ठोत्कण्ठा-वण्ठपुरस्कारव्यापाराणां प्रत्यासीददनङ्गकेलिमहासमरसंरम्भाणां सम्भोगरङ्गवीराणां कौतुकं वीक्षितुमिवाऽऽगतवता भुवनसंतापविलोकनसजातकरुणेनेव गलहस्तितोऽपराह्णेन गतोऽपर-समुद्रतटीमुष्णकरः ।

'अपराङ्गनानुरागसंपादनार्थमिवानुरक्तीकृतश्च सन्ध्यासैरन्ध्रिकया' ज्ञापयितुमिव व्यति-करममुं पूर्वाङ्गनायास्तदभिमुखाः प्रधावितलब्धप्रसरा सर्वतोऽपि च्छाया. ।

आबालकालमहमेव परं प्रियाऽस्य
मत्संगतोऽगमदसौ प्रबलप्रतापम् ।
मत्त्यागतः किमधुना न हतप्रभावो
मामप्यहो ! त्यजति तामपरामुपैति ॥२०३॥

इति स्वहृदये व्यलीकमवधारयन्ती प्रसरता तमसा मलिनमाननमकार्षीत् पूर्वाङ्गना ।

श्रीरस्माकमितोऽत एव मिलिता कोक्यो वराक्यः प्रिये
सद्वृत्त किमतोऽपि कोऽपि किमतः कश्चित् प्रतापेश्वरः ।
वारुण्या रविरप्यसौ रुचिमधाद् दिक्संध्यया रञ्जितो
हा संसारमितीव तन्निजमुखं संकोचितं पङ्कजैः ॥२०४॥

अहो ! बन्धुवर्गानुरूपताच्छील्यमेषाम्, अहो ! परगुणग्रहणस्मरणमेतेषाम्, अहो ! सर्वथाऽपराधासहिष्णुत्वममीषाम्, केवलमसावेव नभोमणिर्मणिरथकल्पः कुशीलचक्रवर्तीति चेतसि स्थितं मदनरेखायाः ।

अत्रान्तरे विज्ञप्तं वैतालिकेन—

वारुण्यामहमप्यरज्यममुया व्यामोहितः सन्ध्यया
पश्चात्तापकदर्थितो ध्रुवमदात् झम्पां समुद्रे रविः ।

१. प्रत्यासीदन् चासौ अनङ्गश्च इति प्रत्यासीददनङ्गः इति समासो बोध्यः ।
२ सैरन्ध्री या अन्यवेश्मस्था परवेश्मोपजीविनी [अभि० चि० का० ३, श्लो० १८५]
३. [अत्र वृत्ते सद्वृत्तः सुशीलः । अथ च वर्तुलः ।]
४ [वारुणी मदिरा । अथ च पश्चिमा दिक् । शेषं सुगमम् ।]
५ अरज्यम् 'रञ्जी रागे' दैवादिकस्योभयपदिनः 'रञ्ज'धातोः ह्यस्तन्या प्रथमपुरुषे एकवचनम् ।

1 °रभोगोऽङ्गरागसमूहेन सन्नद्धा डे । 2 °करणे डे । 3 °वारक्ती° ख । 4 पूर्वानयोस्त° ख । 5 °द् दिक्सन्ध्यया ख, °द् धिग् सन्ध्यया डे । 6 °त्यमम्बुजानाम् अहो डे । 7 °रञ्ज-(ज्य)मिति भो व्या° ख ।

तेनैवोत्प्रसरन्ति पारदलवाकारास्ततः शीकराः
साक्षात् पश्यत पश्यतोडुनिकरव्याजान्नभोमण्डले ॥२०५॥

किञ्च,

निरवधिमहिमानः कुर्वते दुर्नय य
सकृदपि हि से दोषोल्लासहेतु पृथिव्याम् ।
क्षणमपि दिनराजे वारुणीसङ्गमात्र
विहितवति तमोभि प्रस्तुतो मार्गलोप ॥२०६॥

अहो ! चाटुकार[क]व्यापारप्रक्रतिनापि सकलवैतालिकतिलकायमानेनामुना वराकेणानुभवाभरणभूषित भाषितमित्यर्हत्यसावद्भुत किमपि भूषणमिति भाषितवत्यामेव मदनरेखाया कुमारेण सर्वमपि स्वकीयमङ्गलग्नमाभरण गुणिने निजपाणिना व्यतीर्यत ।

ततस्तत्रैव क्रीडासरस्तीरे विधाय सान्ध्य विधिमवन्ध्य समुत्थाय च सहैव प्रेमामृततरङ्गिण्या मदनरेखया युवराज पारापतविरुतविवृतमणिमेखलारणितमणितसूत्रे विचित्रप्रसूनाभिरामप्रलम्बदामजनितचित्रे कर्पूरपूरवासिते पूगीफलकोमलदलचूर्णपूर्णविचित्रनागवल्लीपत्रपात्रे स्फुरदमन्दामोददह्यमानागुरुधूपपवित्रे नवपल्लवकुसुमसज्जितशय्यास्पर्शविसूत्रिततूलिकास्तोत्रे, प्रस्तुतसमस्तेन्द्रियमहामहे कदलीलतागृहे प्रविवेश । क्षणेन च स्वयमेव विरचिताङ्गरागया समास्वादितपञ्चसौगन्धिकताम्बूलसपादिताधरपरभागया प्रमोदमानमानसया विहिततत्कालोचितमिथ सकथया स्थित्वा—

मुदमेका भूर्यद् यदतुलफल यौवनतरो—
र्यदैश्वर्यं श्लाघ्य विषयसुखभाजा यदुचितम् ।
न ससारे सार गणयति यतोऽन्यद् भुवि जन[.]
सिषेवे तत् सौख्य स किल युवराज सह तया ॥२०७॥

इति श्रीजिनभद्रसूरिरचितायां मदनरेखाख्यायिकाया
श्रीमन्नेमिचरित्रापराभिधाया मुदङ्काया तृतीयोच्छ्वास.
समाप्त· ॥

१. य. दुर्नय. कृत. स दोषोल्लासहेतुः इति अन्वय । दोषस्य उल्लासहेतुः । दिनराजपक्षे दोषाया· रजन्या उल्लासहेतु· इति द्वयमपि बोध्यम् ।

२. विरुतेन विवृतम् अर्थात् मणिमेखलारणितस्य पारापतविरुतेन विवरण कृत तादृश तद् रणितम् ।

॥ इति तृतीय उच्छ्वासः समाप्तः ॥

1 °कारे व्यापारे प्र° डे । 2 सर्वमप्यङ्ग° डे । 3 वासितपू° डे । 4 °लपूर्णचूर्णवि° खल । 5 °पत्रसत्रपात्रे डे ।

# चतुर्थ उच्छ्वासः ।

तदनन्तरमनुदिते च चन्द्रमसि, समुदिते[1] परितोऽपि[2] तमसि, समुल्लसिते तारकामहसि,[3] प्रदीपप्रकाशिते रहसि, साक्रन्दे रथाङ्गवयसि,[2] विलासभवनं प्रति प्रविशति प्रेयसि, प्रस्तुते मुनिजनैरावश्यकश्रेयसि,

[3] रौद्रं रूपं धत्ते सुनिश्चितं[5] यद्यपीक्ष्यते सोमः ।
कलयति [6]सत्रासकरं यः कूटं कालकूटमिव ॥२०८॥

अतः प्रबलतया मकरकेतोर्विकारस्य तेनैव गलितबलतया विशुद्धविवेकस्य, दुर्निग्रहतया चटुलवृत्तेरिन्द्रियग्रामस्य, सन्निहिततया महापापकर्मोदयस्य [7]तदानीं मेदिनीपतिरिदमचिन्तयत्, अहो ! चिरेणापि चिन्तयता विरञ्चिना भगवता मदीयं कार्यम् अनुगृहीतोऽस्मि, यदद्य तस्यास्त्रिभुवनललामरेखाया मदनरेखाया सङ्गमोपायघटनालता कुसुमितेव दृश्यते, कथमन्यथा सामग्रिकेयमचिन्तिताऽप्युपनता । एकं तावन्नगरस्य बहिरारामे कुमारोऽयमुषितः, द्वितीयं पुनरतीवस्तोकपरीवारः, तृतीयमीदृशस्य प्रयोजनस्य जननी रजनी, चतुर्थं रुद्धदृष्टिप्रचारः समुल्लसितो महान्धकारः । ततः फलित एव प्रभूतकालादपि मया चिन्तितो मनोरथसहकारः । इति विहितदुरध्यवसायो निजसोदरद्रोहबुद्धिमात्रसहायो गृहीत[8]करालकरवालश्चचाल निजालयाद् व्यालसकुलायामचलायामेकाकी ।

---

१. तारकातेजसि ।

२ चक्रवाकपक्षिणि, सप्तम्यन्तमेतत् ।

३. [ इतश्च स मणिरथो राजा यद्यपि सोमः—शान्त ईक्ष्यते, तथापि चित्ते रौद्रं—भीषणं रूपं धत्ते, अत एव यः सत्रासकरं—भयजनकं, कूटं—कपटं, कलयति—धारयति । किमिव ? कालकूटमिव निजसोदरदुरिताथित्वात् । अथ च स्ट्रस्य—हरस्येदं रौद्रं रूपं सह उमया—गौर्या वर्तते सोमः स हरः सत्रासकरं कालकूटं धत्ते । अग्रेतनं तावद् निगदसिद्धं यावत् 'स्वस्थः' । ]

अत्र प्राचीनटिप्पणीकारेण यः 'स्वस्थः' इति पदं सूचितं तत् ( पृ० ९८, प० ६ ) स्वः + स्थ इत्यस्यापि 'स्वस्थ' इति बोध्यम्, तेन च 'स्वर्गस्थ' इत्यपि अर्थो बोध्य ।

यद्यपि सोमः—चन्द्रः सौम्यतया बहिर्भावेन शीतलः सोमः दृश्यते परन्तु कामोत्तेजकतया स सत्रासकरोऽपि विद्यते । अतः 'सत्रासकरम्' इत्यस्य अयमपि अर्थ एव भावनीयः—सत्रासयन्ति इति सत्रासाः, सत्रासाः कराः—किरणाः यस्य तत् तादृशं सत्रासकरं कूटं विषं—कालकूटम् इव सद्यः प्राणहारि कलयति । 'सोम'शब्दस्य चन्द्रार्थकल्पनापक्षे एषोऽर्थः सघटते । राजा मणिरथः सोम इव बाह्यभावेन सौम्यताधारी दृश्यते तथापि आभ्यन्तरभावेन स स्वसहोदरघातकवृत्त्या कालकूटं विषं कलयति इति भावः ।

---

1 °दिनेऽपि प° डे । 2 °पि समु° डे । 3 °मुल्लासिते ख । 4 कासितर° ख । 5 सनिश्चि° खल । 6 सत्रास° डे । 7 तदानीं पतिरचि° ख । 8 °तकरवालकरालश्च ख ।

स्मरपरवशस्वान्तस्त्रास करोति न पापज
न च गणयति प्रीतिस्थान मनागपि मूढधीः ।
स्वकुलममल ग्लानि नेतु कुतोऽपि न शङ्कते
त्यजति यदि वा सर्वं कामी विशिष्टजनोचितम् ॥२०९॥

तदनन्तरं च तिमिरतिरस्करिणीतिरोहितवसुधरायामकृतपूर्वतया चरणचङ्क्रमणस्य पदे पदे वञ्च्यमानः सदाचरण इव सरणौ, स्थाने स्थाने पतन् दुर्गताविव गम्भीरगर्त्तायाम्, सर्वत्र स्खलश्च दुर्गतिस्थवज्रकण्टकस्तम्भेष्विव स्थाणुषु कथं कथमपि प्राप तमारामम् ।

कस्कोऽत्र भोस्तस्करो घातको वा ? इति प्राहरिकैरुक्तमात्र एव स एवमुक्तवान्, अरे ! किमर्थमस्यां निर्जनप्रचारायामन्धकारभीषणायां विभावर्यामिहारामे कारितः कुमारोऽवस्थानम् ? यदि पूर्वोत्पाटितेषु सामन्तमहीपालेषु प्रणिधिबलादवगत्य समागत्य चैनं रुणद्धि, प्रहरति वा कोऽपि तदा केन किं स्यात् ? अतः कथ्यतां क्व वर्तते कुमारः ? यतोऽहम-धृतितिरस्कृतनिद्राऽऽगमनः कुमारमानेतुमागतोऽस्मि । तदनु प्राहरिकज्ञापिते कदलिकागृहे जगाम । कुमारस्तु समुत्थाय पतितस्तच्चरणयोः ।

अत्रान्तरे विस्मृत्य तां सोदर्यताम्[5], अभाव्य तां विनीतताम्, अपास्य तां स्नेहनिर्भरताम् अनाकलय्य तामुपकारकारिताम्, अनपेक्ष्य सकलत्रिभुवनेऽपि सकलकालमपि जनापवादम्, अङ्गीकृत्य तामेकामनर्थशतप्रदानप्रतिष्ठां पापिष्ठतां पुरस्कृत्य कर्मचाण्डालताम् आकृष्य हृदया-दिव कृष्णलेश्यां प्रत्याकारादसिलताम् उत्क्षिप्तैव निष्ठुरमाहतस्तेन कुमारः कन्धरायाम् । पतितश्च प्रहारवेदनाविसंस्थुलः पृथिव्याम् ।

हा ! धिक् कष्टमकार्यचेष्टितमिदं न क्वापि दृष्टं श्रुतं
न म्लेच्छोऽपि करोति कोऽपि हतको निस्त्रिंशतामीदृशीम् ।
हा ! हा ! दुष्ट निकृष्टधृष्टकुमते ! कर्मेदृशं कुर्वतो
वज्रं पातकपूरितस्य न पतत्यद्यापि ते मस्तके ॥२१०॥

भो ! भोः ! सुभटाः ! धावत धावत, भवतामयं हतः स्वामी अमुना बन्धुव्याजेन वैरिणा पादयोः पतितः ।

१ तिरस्करिणी जवनी 'पडदो' इति भाषायाम् ।
२. सरणौ—मार्गे । "अयनं वर्त्म सरणिः"—अमर० का० २, वर्ग ११, श्लो० १५ ।
३. प्रणिधिः—चरपुरुषः ।

-- 1-स्तम्भेष्विव ल । 2 किमर्थमिह नि° डे, किमस्या नि° ल । 3 निजप्रकारा° डे । 4 °इति न कोऽपि डे । 5 °मभिव्याप्य(भाव्य)तां डे । 6 °णा चरणयोः ख ।

भगवति वसुधे ! पापं किमीदृशं त्वमपि वहसि पृष्ठगतम् ।
हा हा हताऽस्म्यहं मन्दभागिनी हतकदैवेन ॥२११॥

इति पूत्कुर्वाणायामेव मदनरेखायां हा स्वामिनि ! किमिदं किमिदमिति वदन्त एवाकृष्टखड्गयष्टयः सर्वतः सपदि मिलिताः सुभटाः[1] । निजकर्मचकितचेतसा च जल्पितमधमचक्रवर्तिना मणिरथेन, हा ! निरवधानता मे धिक्, श्लथत्वं मत्याकारस्य, यदतः पतितोऽयं हताशः करवालः । सुन्दरि ! सर्वथा मा भैषीः, स्वस्थ[1] एवायं[2] तव प्राणनाथः करिष्यते लग्नं[2], एष वैद्यानाकारयामीति वदन्नेवोपलक्षितः कुमारवीरैः[3] परं 'स्वामी' इति न व्यापादितो नीतश्च पुरतः कृत्वा, राजगृहे निवेदितं सकलमपि[4] इदं चन्द्रयशसोऽग्रे[5] स्वरूपम्[6] ।

सोऽपि हा ! तात ! तात ! किमिदमचिन्तितमापतितमिति प्रलपन्नपि समाहूय व्रणकर्मचिकित्सावेदिनो महावैद्यानागतवानन्तिके जनकस्य । वैद्यैरपि चिकित्साकुशलैरायुर्वेदानुसारेण हितैकचित्तैरारब्धा बहुविधा चिकित्सा न चोपलेभेऽशोऽपि[7] गुणस्य ।

विद्याभिरनवद्याभिः स वैद्यैरुपलक्षितः ।
न जीवतीति मुक्तश्च विद्राणवदनाम्बुजैः ॥२१२॥
धर्मापथस्य योग्योऽयमतोऽत्रैवानुशिष्यते ।
धीरा मदनरेखेति ध्यात्वा वक्तुं प्रचक्रमे ॥२१३॥

जीवितेश्वर ! विज्ञप्तिकामिमामवधेहि ।

इदमनुचितमेव देवतायाः[3] इव वदतीह वधूः प्रियस्य कृत्यम् ।
अपनयति सुधाकरो निशायाः किल कलुषत्वमसौ न जातु तस्य ॥२१४॥
क्वचिदिदमपि जीवितेश ! काले समुचितमेव विचक्षणा वदन्ति ।
अवदति हि मुखे कुतोऽपि हेतोः किमुचितमाह न सञ्ज्ञयापि दृष्टिः ॥२१५॥

ततः सकर्ण ! समाकर्णय दत्तकर्णो भूत्वा समयोचितं मया किमपि विज्ञप्यमानम्—यद्यपि निजपौरुषोपहसितपुरन्दरेण तृणानीवार्यपुत्रेण समूलमुन्मूलितानि रिपुबलानि । जीर्णशीर्णपतितदेवगृहाणीव स्वामिना परमौदार्यपतिनाऽऽमूलचूलानि संस्थापितानि सकलानि

१. [ स्वस्थ इत्यत्र पट्टः, अथवा स्वर्गस्थः । ]

२. यः कन्धरातो विभक्तः स लग्नः करिष्यते, अर्थात् कन्धरया सार्धं लग्नः संबद्धः करिष्यते इति आशयः ।

३. देवतायाः देवरूपस्य इव प्रियस्य ।

1 °टाः कुकर्म खल । 2 एवार्यस्तव हे । 3 °मीति व्या° ख । 4 °पि चन्द्र° ख । 5 °यशोऽग्रे ख । 6 °म् हा तात ! खल । 7 लेभे लेशो गुणस्य हे ।

बन्धुकुलानि । [1]देवताप्रतियातनेव प्रासादेषु प्राणनाथेन [1]सौभाग्यभाग्यसभाराभिरामेण निवेशिता युवतिजनहृदयेषु निजमूर्तिः । सकलप्रबलविपक्षलक्षेषु निशितशरवृष्टिरिव सकलेष्वपि दिगन्तेषु समारोपिता [2]कुन्देन्दुविशदा कीर्तिः । परमखिलमपीदमैहिकमेवार्यपुत्रेण समाचरितम् । इदानीं तु पारलौकिकस्यैवावसरः, तदपि कर्तुमुचितं प्राणेश्वरस्य, तत् पुनरन्तरङ्गरिपुबन्धुवर्गयोरुत्पाटन-समुद्धरणाभ्यामेव भवति । [4]तत्र चेत्थमेव विधीयमाने मानातिरिक्ता परलोकवीरता युक्ता भवति । ते पुनरमी—कषायरिपवो रिपव उपशमादयस्तु बान्धवाः । तेषां तु हेयोपादेयता यथोचितम[5]वधीयतां महाभागेन ।

क्रोधं मुञ्च विधीयतां पुनरसावेका क्षमाऽग्रेसरी
मानं मा स्म वृथा मनस्यविकलं संस्थाप्यतां मार्दवम् ।
मायां खण्डय मण्डय स्वमनिशं स्वेनाऽऽर्जवेनामुना
लोभं शोषय तोषयात्महृदयं सतोषपीयूषतः ॥२१६॥

ये केचिन्नरकं याता यान्ति यास्यन्ति ते ध्रुवम् ।
क्रोधयोधं पुरस्कृत्य तिरस्कृत्य क्षमामिमाम् ॥२१७॥

क्रोधेनान्धभविष्णुना कमपि पितरं मातरं भ्रातरं वा
मित्रं पुत्रं कलत्रं गणयति हतधीः केवलं हन्ति हन्ति ।
आयुष्कर्मावसाने पतति च नरके यत्र तद् दुःखजालं
शक्रो वाऽपि प्रपञ्चाददहिपतिरथवा यन्न वक्तुं समर्थः ॥२१८॥

[2]मानेनापीह माऽनेन वीक्ष्यतां भवता गुणः ।
एतेनाधिष्ठितं सर्वमनुष्ठानं वृथा यतः ॥२१९॥

पाषाणेन नमस्कृतेन किमरे ! किं वाऽमुना भिक्षुणा
मामाराधयताऽहमेव यदहो ! कर्तुं च हर्तुं क्षमः ।
देवस्यापि गुरोरपीह कुरुते निन्दां महामानितो-
द्दामोद्दामम[3]दिष्टया हतमतिर्गच्छत्यतो दुर्गतिम् ॥२२०॥

१. देवताप्रतियातना—देवताप्रतिमा। “प्रतिमा प्रतियातना”—अमर० का० २, शूद्रवर्ग २०, श्लो० ३६ ।

२. [ मानेनेत्यादिश्लोकः—मा मानेन इह प्रस्तावे भवता गुणो वीक्ष्यताम्, शेषं स्पष्टम् । ] ‘इह अनेन मानेन अपि भवता गुणः मा वीक्ष्यताम्’ इति भावः ।

३ दिष्ट—भाग्यम्, अदिष्टम्, अभाग्यम्-दुर्भाग्यम्, अदिष्टम्-दुर्भाग्यं याति इति अदिष्टया दुर्भाग्यगामी-ईदृशो हतमतिर्नरः—हता मतिर्यस्य स हतमतिः—बुद्धिरहितः ।

1 सौभाग्यसभा° डे । 2 कुमुदेन्दु° ख । 3 °कम्याव° ख । 4 तन् तवेत्थ° खल । 5 °म( मा )धीयता खल ।

मैाया विना हि न भवति संसारे किमपि वस्तु यदभिमतम् ।
मायाविना हि न भवति संसारे किमपि वस्तु यदभिमतम् ॥२२१॥

ततश्च,

दम्भारम्भान्न भवति जनः क्वापि विश्वासपात्रं
दम्भारम्भाद् विफलयति ता स्वामनुष्ठानलक्ष्मीम् ।
दम्भारम्भात् पतति नरके याति तिर्यक्षु यद्वा
दम्भारम्भाद् विरम विरम स्व नैयैन च मोक्षम् ॥२२२॥

सकलमपि गुणगणं हन्ति देहिनां हन्त ! सर्वथा तृष्णा ।
सचराचरमपि भुवन ग्रसते यदनित्यतैकाऽपि पश्यत ॥२२३॥

क्षान्तिच्छायाऽतिरम्या रुचिररुचियुता नम्रता पल्लवश्री.
हृद्याऽऽमोदा च शश्वत् कृतसकलफला स्वच्छता पुष्पलीला ।
आत्मारामप्रसूते सुकृतविटपिन· सर्वमेवाप्रमाण
मूले संतोपरूपे यदि च न निहितो लोभनामा कुठार ॥२२४॥

प्राणनाथ ! ततोऽमीपा चतुर्णामपि वैरिणाम् ।
सर्वथा निग्रहं कृत्वाऽनुगृहाण क्षमादिकान् ॥२२५॥

१. [ मायेत्याद्यार्याव्याख्या—मायाविना हि–कपटयुक्तेन हि पुरुपेण ससारे किमपि वस्तु न भवति–कोऽप्यर्थो न संपद्यते, यत् किम् ? यदभिमतम्–अभीष्ट, हि–यस्मात् कारणात्, मायाविना–दम्भानृते, ससारे–ससरणे, भवाद् भवान्तरगमने किमपि वस्तु यत् तु अभिमत तद् न भवति न–ससारीयति–समायस्य सकपटस्य शुभमप्यनुष्ठान संसारहेतुरित्यर्थ । अग्रेतनं 'वहुसं' यावत् स्पष्टार्थम् । ]

ससारे यत् किमपि अभिमत वस्तु तत् मायाः–कपटकर्माणि विना न हि भवति ? अथवा न भवति–न प्राप्नोति ? इति काक्वा प्रश्नः । उत्तराध तु एवम्-ससारे यत् किमपि अभिमत वस्तु तत् मायाविना–मायावी चासौ ना च मायाविना– सकपटः पुरुपः न भवति–न प्राप्नोति अर्थात कपटी ना–नर· ससारे किमपि अभिमतं न प्राप्नोति इति भावः । अत्र 'भूङ् प्राप्तौ' आत्मनेपदीधातु तस्य यद्यपि 'भवते' इति रूप समुचितम् तथाऽपि "आत्मनेपदम् अनित्यम्" इति परिभापया अत्र 'भवति' इत्यपि नानुचितम् । अथवा "प्राप्तौ अपि परस्मैपदम्" इति अन्ये इति क्रियारत्नसमुच्चये (पृ० २४) निर्देशात् प्राप्त्यर्थेऽपि 'भवति'प्रयोगः साधुरेव ।

२ नयेन च–एन च स्वम्–आत्मान च नय मोक्षम् ।

३ सुकृतविटपिन· मूले सतोपरूपे यदि च न निहितो लोभनामा कुठार तदा अतिरम्या छाया पल्लवश्री·, पुष्पलीला कृतसकलफला इत्यादि सर्वम् अप्रमाणम् मानरहितम् अर्थात संख्यातीत सपद्यते, निहिते तु कुठारे सर्व समूल न यति इति भावः ।

४. कृत्वा अनु तदनन्तरमेव, क्षमादिकान् गुणान् गृहाण ।

1 हन्त तृष्णा डे । 2 मोया च ख । 3 सुकृतिविट° डे । 4 यदि वत नि° डे ·

क्षान्तिक्षामोदरी येषामेषा जागर्ति मानसे ।
दोषोल्लासेऽपि तेषां स्यात् क्व कोपाटोपतस्करः ? ॥२२६॥
मार्दवाग्निप्रतापेन द्रावयैतां कुशीलताम् ।
साधुत्वात् सिद्धिसौधे त्वं प्रवेष्टुं लभसे यतः ॥२२७॥
वार्यतां वार्यतां माया छायावज्जाड्यभीरुणा ।
सेव्यतां सेव्यतां धर्मो घर्मवत् स्वार्जवान्वितः ॥२२८॥
पीत्वा संतोषपीयूषं सपद्यस्वाजरामरः ।
तृष्णा पुष्णाति या तापं साऽप्यतो विनिवर्तते ॥२२९॥
राग-द्वेषौ कषायाणाममीषां पोषकौ यतः ।
एतावपि महावीर ! हन्येतां भवता ततः ॥२३०॥
निमज्जति समन्ततो विषयसंगरङ्गे पुरा
समुल्लसिततापयोत्कलिकया ततः क्वथ्यते ।

१. क्षामोदरी–कृशाङ्गी–तन्वङ्गी स्त्री ।

२. दोषाणाम् उल्लासे–वर्द्धमानत्वे सत्यपि । यथा दोषायाः–रात्रेः, उल्लासे–वर्धमानत्वे, तस्करः–चौरः समायाति तथा अत्र हृदये क्षमाक्षामोदर्या जाग्रत्या सत्या दोषोल्लासेऽपि न कोपाटोपरूपः, तस्करः–चौरः समायातुं शक्तः इति भावः ।

३. शीतयुक्तेन यथा छाया वार्यते तथा जाड्यभीरुणा यथा घर्मः–उष्णता सेव्यते तद्वद् अज्ञानभीरुणा स्वकीयसरलस्वभावयुक्तः धर्मः सेव्यतां सेव्यताम्–द्वित्वं पूर्ववत् ।

४. सपन्नो भव ।

५. अस्मिन् २३१ श्लोके 'सरागचिन्ताम्बरम्' इत्यत्र 'अम्बर'शब्देन वस्त्रं ग्राह्यम् । अत्र 'ल प्रतौ 'सरागचिन्ताम्बरम्' इति पाठः तथापि 'सरागचित्ताम्बरम्' इत्येष पाठः समुचितः । 'चिन्तारूपम् अम्बरम्' इत्येतस्याः कल्पनातः चित्तरूपम् अम्बरम् इत्येषा कल्पना गरीयसी ।

अत्र श्लोके वस्त्रं केन क्रमेण रज्यते इत्येषा प्रक्रिया प्रदर्शिता, तया सहैव चित्तरूपं वस्त्रं कथं कषायेषु कामादिषु रज्यते ? एषाऽपि प्रक्रिया प्रदर्शिता, तथाहि–अस्य श्लोकस्य प्रथमादिपादेषु रज्यमानं वस्त्रं प्रथमं तावद् यथा पुरा रङ्गे समन्ततो निमज्जति तथैव चित्तरूपं वस्त्रं पुरा विषयसंगरङ्गे समन्ततो निमज्जति ।

ततः तद् वस्त्रम् अतिशयोष्णजललहर्या तापेन क्वथ्यते, तथैव चित्तरूपं वस्त्रं समुल्लसिततापया उत्कलिकया–कामादितापरूपया उत्कण्ठया–आवेगरूपया क्वथ्यते–विशेषतः आवेगरूपतापयुक्तं जायते। ततः रज्यमानं वस्त्रं स्वरूपविरुद्धक्रमं यथा स्यात् तथा मूलरूपं विहाय कषायघटना रङ्गप्राप्तिरूपां घटनां भजति–आश्रयति–रङ्गयुक्तं भवति तथैव रज्यमानं कामादिरागयुक्तं चित्तं स्वनिर्मलरूपविरुद्धक्रमं यथा स्यात् तथा कषायघटनां कामादिकषायघटनां भजति । एवं चित्तदशायां जातायां मदनरेखा सकान्तं विबोधयति, यत् हे प्रभो ! त्वं प्रदत्तजडिमं प्रदत्तजलत्वं तत् कषायघटनां भजद् वस्त्ररूपं

कषायघटनामथो भजति यद्विरुद्धक्रमं
प्रदत्तजडिम प्रभो ! त्यज सरागचित्ताम्बरम् ॥२३१॥

अपि च,

आत्माभ्याससुधां न जातु भजतेऽनित्यादिसद्भावना-
द्राक्षापाणकमुज्झति क्षिपति ता सिद्धान्तगीःशर्कराम् ।
सत्संसर्गनिसर्गपेशलपयो यद् द्वेष्टयय चेतन-
स्तत् सर्व विषयस्पृहामदिरया सपादित वै-कृतम् ॥२३२॥

किञ्च,

मूर्च्छानन्द[1] कणितमणितं[2] दासभाव-प्रभुत्वं
हेयादेय कुरुत सुरतं[3] न्यत्क्रियैकप्रवृत्ति ।
कर्मदृक्ष प्रभवति यत. सैप मिथ्याविकल्प.
कामो वाम· कथमिव न दु खात्मकः सौख्यरूपः[4] ? ॥२३३॥
स्फुरति सुखसमीहा यद्यहो[5] ! मानसे ते
त्यज[6] विषयपिपासा सर्वथा शुद्धबुद्धे ! ।
दुरधिगमशिखाग्र शैलमारोढुकामो
न विशति विवरान्तः कोऽपि कुत्राप्यमूढ ॥२३४॥

---

चित्त त्यज अर्थाद् यथा तत्र रङ्गिते वस्त्रे जल दत्त्वा—जलेन तत् क्षालयित्वा तत् तादृग सरङ्ग वस्त्र रङ्गरहित क्रियते लोकेन, रङ्गानाकाङ्क्षी लोक. तादृग सरङ्ग वस्त्र त्यजति तथैव त्वमपि सरङ्ग—सराग चित्ताम्बरं त्यज । प्रदत्तजडिम इत्यत्र ड-लयोरैक्यात् 'प्रदत्तजलिम' इत्यर्थ स्वीकृत्य जलक्षालनरूपोऽर्थ· सवोध्य', चित्तरूप वस्त्र तु 'प्रदत्तजडिम'—प्रदत्तो जडिमा—जाड्य येन तत् प्रदत्तजडिम—कामादिकषाययुक्त हि चित्त जाड्यवर्धक भवत्येव इति 'प्रदत्तजडिम'पद 'जडभावदायि' इत्यर्थ सूचयति ।

१. विकृतेः इद वैकृतम्—विकार । अथवा 'वै कृतम्' इत्येव भिन्नभिन्नपदकल्पनाया वै सनिश्चय कृतम्—सपादित कृतम् इति ।

२. मणित हि स्त्रीणा कामक्रीडावसरे जायमानः अव्यक्त· ध्वनिः । 'कणितम्' इत्येतदपि दु.खसूचको ध्वनि. ।

३. न्यत्क्रिया—तिरस्काररूपा क्रिया, सा एव एका प्रवृत्ति'—प्रवृत्तिरूपा यस्मिन् सुरते तत् तादृग न्यत्क्रियैकप्रवृत्ति सुरतम् ।

४. सौख्यरूपः काम वामः सन् कथमिव न दुःखात्मक ?

---

1 °न्द कुणित° डे । 2 °भाव प्रभुत्व खल । 3 त न्यक्रियैक° खल । 4 °कः शुद्ध-बुद्धे. डे । 5 °यदी मा° डे । 6 त्यजति विषयविपाशा स° ख ।

विधाय भवभीरुता हृदि निधाय ता निर्वृति
प्रपद्य गुरुशासन कुमतज विमुच्य भ्रमम् ।
विरम्य विकथापदात् सकलत पराऽवर्णतो
भजस्व समता परा किमपराऽपराडम्बरै. [1] ॥२३५॥

युगवाहुरपि तस्मीस्पदेशरत्नैरपास्तसमस्तकपायविपयदोपान्धकार प्रतिभासमान-प्रधानात्मस्वरूपलेश. प्रमोदमेदुरमानस स्मेरवदनतामरस. स्वभालतलघटितकरसपुट पर्यन्तावस्थानुरूपेण मन्दमन्दस्वरेण निजगाद ।

किमघटि घनसारैर्वेधसा गीस्त्वदीया
किममृतकरखण्डै सुभ्रु ! कि वा सुधाभि ।
मम मनसि यदेषाऽऽमोदलक्ष्मी विधत्ते
व्यपनयति च ताप सौमनस्यं च दत्ते ॥२३६॥

यत:—

साधुनाऽमुना तवोपदेशेन व्यपगतो मे प्रजा-पुत्र-कलत्र-मित्रादिजनितार्तिविषाद-दुर्गन्धसम्बन्ध. । यदहमिदानीमिद तावदेक चिन्तयामि । इयमशेषशेषसमुज्ज्वलशीलादि-गुणगणाधारस्वान्ता पार्श्वस्था हृदयस्था च सदैपाऽऽसीना कान्ता । स्वयं च परमानन्दाधार. सकलविनयादिगुणग्रामालङ्कार सनिहित एव हार इव कुमार' । तथाऽयमपि शरीरत्यागेनापि प्रस्तुतप्रभुप्रयोजनसिद्धिसर्ग. सकलोऽपि मुखनिरीक्षणपरो भृत्यवर्ग । तथेयमायुर्वेदनदीष्ण-महामतिविविधोपचारव्यापारविफलीभावजायमानमानसाऽभृते पुरत एव वैद्यसहति । परममीषामेकेनापि प्रतीकारशतकरणोद्यतेनापि न शक्यते दु.खलवोऽपि निवर्त्तयितुम् । यत —

यदर्जित स्वय दु.ख सुख वा पूर्वकर्मभि ।
ससारे तदिद सर्वं स्वयमेवानुभूयते ॥२३७॥

तदेप सकलोऽपि पुत्र-कलत्रादिगोचर स्नेहो व्यामोह एव न पुनरस्य सकलस्यापि क्लेशरूपस्य कश्चिदपि तत्त्वलेश. तदल मम स्वकर्मफलभुज सर्वथाऽप्यनेन कलत्रादिसबन्धेन। द्वितीय पुनरिद यावदिह देहिन सर्वस्य शुभ. कर्मविवर्त्तो वर्त्तमानस्तावदियममला कमलालया,

१. 'विकथापदात्' इत्यस्य विशेषणम् 'पराऽवर्णत' इति। सकलत सर्वप्रकारात्, विकथापदात् विकथास्थानात्, किंभूतात् विकथापदात् ? पराऽवर्णत.—पर परमरसरूपः अवर्णवादः परनिन्दादिरूप. यस्मिन् तस्माद् विकथापदाद् अथवा परः परकीयः अवर्णः अवर्णवाद' यस्मिन् तस्मात् परावर्णतः ।
२. नदीष्ण.—कुशल' ।

1 किमपर परा° ल । 2 उरगवाहु° डे । 3 °तरुचिम्ब° डे । 4 °क्ष्मीं च धत्ते ड । 5 अयं च ख । 6 दुःखलेशोऽपि डे । 7 °दिह न स° ख ।

तावदेता. सपादितचित्तरतयो युवतयः, तावदेते सुहृत्स्वजना अप्यहपूर्विकया सततममन्दमानन्दमुत्पादयन्ति । तदपगमे तु ततोऽन्यतो वाऽपि, स्वदेहतो वाऽपि, दुःखमेव केवलमापद्यमानमीक्ष्यते । ततः कथमहमन्यस्मै कुप्यामीति निवृत्तस्ताप', अत एव मणिरथेऽपि सद्यो हन्तरि पितरीव मातरीव पोतरीव दातरीव हितविधातरीव निजाभिमतवक्तरीव समुदपद्यत प्रागिवानवद्य एव स्वामिबन्धुभाव । तृतीय पुनरेतदेव यदुचितविषयव्यासङ्गप्रभव एव निःशेषोऽपि दु खविस्तार ससार । तदुपशमनक्षमत्व समशत्रु-मित्रभावस्य मम सौमनस्यमेकमेव तदतदेव मम जगतोऽपि प्रियतम कर्तुमुचितमिति । तत प्रिये ! प्रियमिद विदधानया न केवलम्—कलत्रता सकलत्राऽपि स्वस्य सपादितेव त्वया । कि बहुना² समाकर्णय सकर्णे ! त्वम्—

> किमुपकृतिरिय तेऽधत्त सर्वाधिपत्य
> किमनघकरुणा वा कि विशुद्धा मतिर्वा ।
> नहि पतति यदा सा कुर्वती स्वस्वकृत्य
> क्वचिदपि किल पश्चात् क्वापि पङ्क्तिस्थितेव ॥२३८॥

वत्स चन्द्रयश. ! त्वयोत्साहितैर्वराकै सूत्रिता विचित्रा मन्त्रा , निबद्धानि कण्डकानि, लिखिता रक्षा, विहितानि भूतिकर्माणि, नियोजिता विद्या , समाकृष्टा देवता , कृतानि तन्त्राणि पर न कोऽपि ततोऽप्युपकारविशेषस्तदलमेभिश्चिकित्सकाद्यै , कृत शोकेन, पर्याप्त विषादेन, यदि मम वत्सोऽसि तदुत्साहय जननीमेव, येनेय पूर्वोदितमधिक वा स्मारयति कारयति वा यतो नाहमत पर वक्तु शक्ष्यामि ।

ततोऽभिहित मदनरेखया, कि प्राणेश्वर ! तव शासनादपि वत्सप्रोत्साहना मम गरीयसीत्युक्त्वा तत कर्णाभ्यर्णस्थिता वीणावेणुमनोहरेण ध्वनिना वक्तुमारभत—जीवितेश्वर ! वीतराग मनसिकृत्य सोपयोगमना सर्वस्मात् प्राणातिपातात्, सर्वस्मान्मृषावादात्, समस्तादचादानात्, अखिलादब्रह्मसेवनात्, अशेषात् परिग्रहात्, समन्तान्निशाऽशनात्, अन्यूनात् क्रोधाद्, अखण्डान्मानात्, विश्वस्माद् दम्भात्, सकलाल्लोभात्, प्रत्यक्षाद् रागात्, निखिलाद् द्वेषात्, कृत्स्नात् कलहात्, सपूर्णादभ्याख्यानात्, निरवशेषात् पैशुन्यात्, अक्षूणात्

१. रक्षितरि—पालके ।

२. [ केवल कलत्रता भार्यात्वम्, सकलत्रा—सर्वरक्षकत्वम् । अग्रेतन 'तद्यथा' (पृ० १०३ प० ३ ) पर्यन्त सुगमम् । ]

1 °दितरतयो डे । 2 °हतोऽपि डे । 3 °थे सद्यो खल । 4 समस्तान्मृषा° ल । 5 °मग्राद° ल ।

परपरीवादात्, नि.शेषतो मायामृषावादात्, सर्वदोषमूलान्मिथ्यादर्शनशल्यात् त्रिविध-त्रिविधेन विरति प्रतिपद्य [2]वीरशिरोमणे ! समाहितो भव । समस्तभवभ्रमण[3]निवारक शिव-समृद्धिकारक विशेषेण पुनरिद सहृदयहृदयभूषण विधेहि चतुश्शरणम् । तद्यथा—

[1]वारितरागगजेन्द्रा विस्तारितरङ्गवृद्धिमादधत ।
अमृतमयास्तव शरण सन्तु समुद्रा [4]इवार्हन्त. ॥२३९॥

[2]दलिताखिलद्विपो ध्वस्तविग्रहा निर्वृति परा प्राप्ताः ।
जगदुपरिवर्तिनः सिद्धचक्रिण. सन्तु तव शरणम् ॥२४०॥

[3]नीरजस-योग य प्रतिपन्न. परमहसता तनुते ।
चरणस्थ-मुख्यराग. साधुस्तव साप्रत शरणम् ॥२४१॥

१ [ वारितेत्याद्यार्या—समुद्रे वारितरा'—जलचारिण', अगाः—पर्वता', गजेन्द्राश्च सन्ति । तथा विस्तारिणो ये तरङ्गा'—कल्लोला', तेषा वृद्धिम्—अधिकत्वम , आदधतः—धारयन्त', अमृतमयाः—पीयूषमयाः, जलमयाः वा । जिनेन्द्रास्तु वारित' निषिद्धः रागगजेन्द्रो यैस्ते तथा । विस्तारितर यथा भवति, गवा—वाणीनाम ऋद्धिं—समृद्धिम आदधत । अमृतमयाः—मोक्षसौख्यमया' । ]

' वारितर + अग + गजेन्द्रा' ' इत्येव समुद्रपक्षे पदविभाग' । ' विस्तारितर + गो + ऋद्धिम् ' इत्येव जिनेन्द्रपक्षे पदविभाग' । अर्थस्तु पूर्वटिप्पणीकारेण दर्शित एव ।

२ [ दलितेत्यादौ—दलिता अखिला द्विप' वैरिण' एकत्र वाह्या, अन्यत्र आन्तरा यैस्ते तथा । ध्वस्तो विग्रह'—विरोधः, अन्यत्र विग्रह—शरीरम् । निर्वृति सुख मोक्ष च । जगदुपरि वर्तमानः सर्वमण्डलीकपूज्यत्वाद् अन्यत्र मोक्ष प्राप्तत्वाद् इति सिद्धाना चक्रिणा सह श्लेष' । ]

ध्वस्तविग्रहा'—ध्वस्तशरीरा' ध्वस्तकलहा वा ।

३ [नीरजेत्यादि—नीरजसं—निष्पाप योग मोक्षोपाय प्रतिपन्न'—अङ्गीकृतवान् साधु' । परम-हसता—परमात्मत्व तनुते विस्तारयति । चरणस्थ'—चारित्रावस्थित , मुख्यः—प्रधान', राग —आसक्ति-रूपः यस्य स तथा । अथ च परमहंस'—राजहसः स च नीरजस्य—पद्मस्य सयोग प्रतिपन्नः । चरणस्थो मुखे भवो मुख्यश्च राग' शोणितत्व यस्य स तथा । ]

नीरजसं योगं—रजोगुणरहित योग प्रवृत्तिरूप काय-वाक्-चित्तव्यापार प्रतिपन्न, अथवा नीरजवत्—कमलवत् निर्लेपतायुक्त सयोग प्रतिपन्नः ।

नीरजम योगम् अथवा नीरज संयोगम् इति विभागः । हसस्य चरणौ रक्तौ भवतः तथा मुखम अपि रक्त भवति, अत एव अत्र ' चरणस्थ 'शब्देन हसपक्षे चरणगतो रागो वोध्य' तथा ' मुख्य 'शब्देन ' मुखे भव मुख्य' ' इति कृत्वा मुखगतो रागो वोध्यः । रागो नाम लोहितवर्णरूपो रङ्ग । साधुपक्षे चरणे—चारित्रे स्थितो य मुख्य प्रधान' राग' अभिष्वङ्गलक्षण' स्नेहो वोध्य' ।

1 °शेषान्मा° डे । 2 धीरशि° खल । 3 °णवार° डे । 4 इव जिनेन्द्र' डे ।

ये ज्ञानात् केवलिनोऽरिहतौ बलिन शिवाम्बुजेष्वलिन ।[1]
प्रज्ञप्तस्तैर्धर्म. शरण तव भवतु शुद्धमते ! ॥२४२॥

शरण गतश्चतुर्णामेपा य स खलु भवति मुक्तात्मा ।[2]
मध्येमुक्ताहार सिद्धिवधूस्तनतटे लीनम् ॥२४३॥

व्युत्सृज राज्य प्रतिवन्धकारण पुत्रमिममिम देहम् ।
मा पुनरेता स्वामिन् ! विशेपतो व्यसनशतमूलम् ॥२४४॥

यत सर्वाप्यङ्गना करवाललतेवानेकधारा गवि रागसपादिका रणं प्रति कारण च,[3] पणरमणीनामिव पुरुपाणामङ्गना प्रथमानबन्धननिवन्धनम्, वहुविधानुरागस्य आदिकारण सामान्यस्यापि तवेव अङ्गनाशनप्रमुखनिमित्तम् ।[4] यतः—

१. [ ये ज्ञानात् ज्ञानेन कृत्वा केवलिनः—अछद्मस्थज्ञानिनः । अकारस्य लुप्तत्वाद् अरिहतौ रागादिवैरिध्वसे वलिनः—समर्थाः । शिवाम्बुजे तु मोक्षरूपे कमले अलिनः—भ्रमराः, तत्रावस्थितत्वात् तेपाम् । प्रज्ञप्तस्तैर्धर्मः । ]

अरिहतौ—अरिणा हतिः अरिहतः, तत्र रागादिकशत्रुघाते । अलिनः—अलयः, भ्रमराः ।

२ [ शरणमित्यादौ—मुक्ताहारस्य मध्ये मुक्तात्मा—मौक्तिकस्वरूप । अथ च मुक्त आहारो यैस्ते मुक्ताहारा अर्थात् सिद्धाः, तेपा मध्ये मुक्तात्मा—मुक्तिगतजीवः । ]

मुक्तश्चासौ आत्मा च । हारपक्षे मौक्तिकरूप । मध्येमुक्ताहार—मौक्तिकहाररूपाणा मुक्तात्मना मध्ये यथा स्यात् तथा । तथा मध्येमुक्ताहार कीदृशम् ? तदुत्तरम्—सिद्धिवधूस्तनतटे लीनम् हारो हि वध्वाः स्तनतटे लीनो भवत्येव इत्येव क्रियाविशेपणस्यापि एतद् विशेपणं ग्राह्यम् ।

३ [ अग्रे अङ्गना अनेकानेकप्रकारं राग-विरागयोः अभिष्वङ्ग-द्वेपयोः सपादिकरणं प्रति सपत्तिहेतु मोह प्रति कारणं—निमित्तम, स्त्रीसंबन्धात मोहस्योत्पत्तेः । करवाललता पुनर्न एका धारा यस्याः सा, अनेकधारा—धाराद्वयत्वात् तस्याः । गवि—पृथिव्या विपये, रागस्याभिलापसपादिका खड्गहस्तस्य भूपतित्वाभिलाषाद् रण-संग्रामं प्रति कारण च । ]

अनेकधारा करवाललता इव सर्वा अपि अङ्गनाः गवि—पृथिव्या रागसपादिकाः, रण—युद्धं प्रति कारण च । अथवा 'अनेकधा राग-विरागसंपादिका' इत्येव पक्षे करवाललता इव अङ्गना अनेकधा—अनेकप्रकारेण रागस्य विरागस्य च सपादिका ।

४ [ पुरुपाणाम् अङ्गना—स्त्रीः, प्रथमान च तद् वन्धन च प्रथमानवन्धन तस्य निवन्धन—कारण गुरुतर वन्धहेतुः । वहुविधाः—क्वचित् तुष्टाः, क्वचिद रुष्टा इत्यादिवहुप्रकाराः । नुः—पुरुषस्य, आगसि—अपराधे, आदिकारणं—मुख्यनिमित्तम् । पणरमणीना—वेश्याना पुनरङ्गना—स्त्रीः प्रथमा तरुणी सती, नव—नूतन, धननिवन्धन—द्रव्यार्जनहेतु. । वहुविधस्य वेश्याजनप्रतीतस्य अनुरागस्यादिकारणम । सामान्यस्यापि—इतरस्यापि, अङ्गना—स्त्री । अशनप्रमुखस्य—अन्ननिष्पत्त्यादेनिमित्तं तव पुनः, हे युगवाहो ! सामान्यस्यापि अङ्गनाशनप्रमुखस्य शरीरग्निनाशादेर्निमित्तम् । अग्रेतन 'शोकशङ्कुसमाकुलम् इत्यन्त सुवोधम् । ]

1 तटेऽवम्यम खल । 2 °मिद देहम् ल ।

वनितैवावनिपृष्ठे प्रेष्ठतमा भृशमनर्थसार्थस्य ।
तेनैव जिनेन्द्रैरिह दूर दूरेण संत्यक्ता ॥२४५॥

किञ्च,

ज्ञानाद्यभिन्नमेकं भिन्न देहस्वबन्धु-वस्तुभ्यः ।
आत्मानमेव चिन्तय भजस्व तच्चिन्तया महानन्दम् ॥२४६॥

अपर च, आत्मानमिव समस्तशास्त्रस्य[1] सारम् प्रदत्तनिःशेषभव्यप्राणिगणसंसारपारम् पञ्चपरमेष्ठिनमस्कार निरुद्धत्रिकरणव्यापारः प्रणिधेहि—

ये याता यान्ति यास्यन्ति पार दुःखमहोदधेः ।
विश्वसार नमस्कार स्मार[2] स्मार क्षमेश ! ते ॥२४७॥
नमस्कारः पिता माता नमस्कारः सखा गुरुः ।
नमस्कारः श्रियो विद्या नमस्कारः कुल बलम् ॥२४८॥
दान-शील-तपो-भावैः किमेभिः प्रथितरपि ।
पञ्चपूज्या[3] प्रजापश्चेन्निश्चलश्चेतसि[4] स्थितः ॥२४९॥
यत्रैकोऽपि नमस्कारः कि तत्रान्यैः क्रियान्तरैः ।
यत्राऽऽलोको दिनेशस्य तत्राऽऽलोकान्तरैरलम् ॥२५०॥
नमस्कार विना मन्त्रो न भूतो न भविष्यति ।
मोक्षोपायोऽपि विश्वेऽपि[5] न देवोऽपि विना जिनम् ॥२५१॥

'प्रथमानवन्धननिवन्धनम्' इत्यस्य अनेकधा पदविभागः—(१) प्रथमान + वन्धन + निवन्धनम् । (२) प्रथमा + नवम् + धननिवन्धनम् । प्रथमानवन्धन°—विस्तारप्राप्तवन्धन° । तव अङ्गनाशन°—देहविनाशनम् इव ।

'वहुविधानुरागस्य आदिकारणम्' इत्यत्र 'वहुविधानुरागस्यादिकारणम्' इत्यस्यापि अनेकधा पदविभागः—(१) वहुविधस्य अनुरागस्य आदिकारणम् । (२) वहुविधा: नु आगमि आदिकारणम् । अत्र 'वहुविधाः' इति अङ्गनाया विशेषणम् ।

अङ्गनाशनप्रमुख° इत्यादिपदस्यापि वहुविधः पदविभागः— (१) अङ्ग + नाशन° । (२) अङ्गना + अशन° ।

१ प्रष्ठः—अग्रगः—अग्रेसरः ।

२. स्मार स्मार—स्मृत्वा स्मृत्वा ।

३. पञ्चाना पूजाना समाहारः पञ्चपूजी तस्या पञ्चपरमेष्ठिपूजायाम् ।

४. प्रजापालकः राजा अथवा प्रकर्षेण जाप यस्य स प्रजाप—निरन्तर समुत्कृष्टतया जापविधाता ।

५. जगति अपि । अत्रान्वय एवम्—विश्वेऽपि जिन विना न देवोऽपि मोक्षोपायः । 'मोक्षोपाय'पदेन सलग्न 'अपि'शब्दः न कोऽपि विशेषार्थसूचकः ।

1 समस्तसार शास्त्रस्य ख, समस्तशास्त्रसार ल ।

हित्वा सर्वं नमस्कारपरो भव विचक्षण ! ।
करगचिन्तारत्नस्य कपर्दैः किं प्रयोजनम् ॥२५२॥
यदि हृदयाल्वालमाक्रामति शुद्धबुद्धेरिह
परमेष्ठिपञ्चनमस्कृतिकल्पलता कियदिव ।
तस्य शक्रचक्राधिपसौख्यमहो !
करकमलस्थमेव यस्मात् खलु मुक्तिसुखम् ॥२५३॥
इत्थं प्रोत्साह्यमानस्य नमस्कारस्थचेतस. ।
आयुः स्पर्द्धयेवादौ क्षीणस्तस्य मनोभ्रम ॥२५४॥
उभयभवसहायौ न्याय-धर्मावपीमौ
जहति किल यदर्थे प्रायश प्राणिनस्तैः ।
दशभिरसुभिरेपोऽष्टादशार्थैश्च मुक्तोऽ–
गमदथ परलोकं त्यक्तनि.शेषशोकः ॥२५५॥

तदनन्तरमेव च पौरपरीवारस्वजनैः सह चन्द्रयशसि 'हा तात तात, हा नाथ ! हा ! नाथ !' इति युगपदाक्रन्दितु प्रवृत्ते तदाक्रन्दप्रतिरवे च रोदसी पूरयितुमिव प्रसरति सति मदनरेखा प्रबलमपि नूतनमपि दु.सहमपि प्रियतममरणसमुत्थं शोकसन्ताप सुनिश्चितसमाधि-प्रधानावसानाऽऽराधनाऽविनाभूतप्राणनाथसद्गतिलाभसम्पादितानन्दनन्दनेन पतिव्रताव्रत-रक्षणवैचक्षण्यलक्षणक्षणदापतिव्यतिकरकान्तविवेकचन्द्रकान्तनितान्तधीरिमसुधास्यन्दनेन च तत्काल निरस्य पर्यस्यति स्म । तथाहि–धिगिद मम रूपलावण्याद्यनर्थसार्थकुलगृह देह यद-मुनैव युगान्तसमयेनेव पापीयसा त्याजयित्वा मर्यादां नृपसमुद्रेण सहारयाचक्रे स्वबान्धव-भुवनम् । तदस्यैवात्मघातपातकमपि कृत्वा निग्रह समुचित. प्रतिभाति, परमनेन गर्भस्थे-नापत्येन समासन्नचरणपरिणामेन रक्षितमिदम्, तथापि पतिसुखरहितस्य किमस्याद्यापि पुत्र-राज्यसुखेन [2] । तिष्ठति चात्रामुत्र पुत्रस्यापि पत्युरिव कुशलं नास्ति तस्मात् पुत्रस्य च

१ भाषाया 'कोडा'–रमवानी कोडियो नानी अने कोडा मोटा ।

२ आल्वालः–केदारः–भाषाया 'क्यारो' ।

३ दशभि असुभि प्राणैः–"पञ्चेन्द्रियाणि त्रिविध बल चोच्छ्वास-नि श्वासमथान्यदायु । प्राणा दशैते भगवद्भिरुक्ता ।" अर्थाद् इन्द्रियाणि पञ्च, मनोबलम्, वाग्बलम्, शरीरबल च उच्छ्वास-नि श्वासौ, तथा आयु इति दश असवः–प्राणा ।

४. पूर्वोक्त प्राणातिपातादिरूपैः अष्टादशभिः पापस्थानकैश्च ।

५ तिष्ठति सप्तम्यन्तमेतत्–अस्मिन् देहे अत्र तिष्ठति सति ।

1 शुद्धमतेरिह खल । 2 °नन्द चन्द° डे ।

शीलस्य च परिपालनाय पलायनमेव कालोचितमिति सम्प्रधार्य तत्रैव निशीथे तस्मिन्नेव प्रमदवने विहाय शोकशङ्कुसमाकुलमेव विश्रुताश्वसेनात्मज[1] चन्द्रयशसम्, दलितसकलशोकशङ्कुं पुनर्विश्रुताश्वसेनात्मजं पार्श्वनाथं हृदि[2] निधाय, पश्चात्कृत्य सकलभवनराजीविराजिता परमाश्वासनावसति[3] पुरं समृद्धिम्, महाटवीं पुनः सकलभवनराजीविराजितां परमुल्लासवती पुरस्कृत्य पदे पदे परमात्मानं महापन्नगभूषितं वर्णयन्ती निन्दन्ती च परमात्मानं महापन्नगभूषितं स्वस्थानस्थितयोरात्मस्वान्तकल्पयोः पत्यपत्ययोरसन्निहिततया मृतमेवात्मानं गणयन्ती

१. [ विश्रुता अश्वाना तुरङ्गमाणा–सेना यस्य युगबाहोरात्मनश्च सकाशाज्जातः, विश्रुताश्वसेनात्मजः, त चन्द्रयशस पुत्र विहाय–त्यक्त्वा । विश्रुत'–प्रसिद्धः अश्वसेनो नाम राजा तस्यात्मज–पुत्र पार्श्वनाथ हृदये विधाय–निवेश्य । ]

विश्रुता–प्रतीता अश्वसेना यस्य स विश्रुताश्वसेनः–युगबाहुः, तस्य आत्मज–विश्रुताश्वसेनात्मज चन्द्रयशसम् । दलितसकलशङ्कुम् इति पार्श्वनाथस्य विशेषणम् । अत्र खप्रतिगतस्य 'तदलितसकलशोकशङ्कुम्' इति पाठस्य अयमर्थ–तस्या' अलितः–वारित. सकलः शोकशङ्कुः येन स तदलितसकलशोकशङ्कुः, तम्, 'अली भूषण-पर्याप्ति-वारणेषु' धातुः इत्यस्य भूतकृदन्तम्–अलितम्–वारितम् । विश्रुतः–प्रसिद्ध', अश्वसेनपुत्र. पार्श्वनाथो जिनः त हृदि निधाय ।

२. [ सकलाना भवनाना–गृहाणा राज्यश्रेण्या विराजिता परमा–प्रकृष्टा या आश्वासना–संबोधना तस्या. वसतिमीदृशीं पुरःसमृद्धि पश्चात्कृत्य । सकलभा–लघु–वनगजसहिता या वनराजी–वृक्षसमूह'–श्रेणिस्तया विराजिता परमाश्वासनावसति–प्रकृष्टवयाधारामीदृशी महाटवीं पुरस्कृत्य । ]

परमाया'–उत्कृष्टाया' अश्वसेनायाः वसति–निवासं–स्थानरूपा, पुर'–नगरस्य समृद्धिं पश्चात्कृत्य । कलभैः सहित–सकलभम्, कलभा'–करिपोता –हस्तिबालाः, तेषा वनं सकलभवन तस्य राजी तया विराजिताम् । तथा परमा उत्कृष्टा आश्वासना आश्वासनम् तस्या वसतिम् अर्थात् प्रकृष्टे वयसि आधाररूपा ताम् अटवीम् ।

३ महापन्नगभूषित–धरणेन्द्रसर्पशोभित परमात्मान पार्श्वजिन वर्णयन्ती महती या आपद् वैधव्यरूपा । सैव नगभू –पर्वतभूमि, तत्रात्मानमुषितम् महापदि–महापायायाम्, नगभुवि–पर्वतभूमौ उषित वा स्थित, परम्–अत्यर्थ निन्दन्ती, स्वस्थाने–स्वर्गस्थाने स्थित पतिः । स्वस्थाने स्वनगरे स्थितमपत्य–चन्द्रयशा । ]

महापन्नगभूषित–पार्श्वनाथम्, पार्श्वनाथो हि महापन्नगेन भूषितः इति प्रसिद्धिः । वर्णयन्ती–प्रशसन्ती–ध्यायन्ती । निन्दन्ती च परमात्मानम्–परम् आत्मान स्वात्मानं च निन्दन्ती, 'महापन्नगभूषितम्' अस्य द्विधा पदविभागः–(१) महा + आपद् + नग + भू + उषितम् । (२) महापन्नग + भूषितम् । महती आपद् यैस्ते महापद', महापदश्च नगाश्च–पर्वताश्च, महापन्नगा' तेषा भूः महापन्नगभू –महापन्नगभूवि उषित–कृतनिवासं महापन्नगभूषितम् आत्मानम् अथवा महापन्नगभूषित –महापन्नगेन अटवीस्थितेन, महापन्नगेन–अजगरेण भूषितम् आत्मानम् ।

४. पतिश्च अपत्य च पत्यपत्ये तयो. पत्यपत्ययोः ।

1 °सम् तदलित° ख । 2 हृदये नि° डे । 3 °तिं सुरस° डे । 4 परमश्वास° डे ।

कुलटामिवानेक[1]धवकलिता सतिल[2]कालिका स्निग्धशोभाञ्जनाभिरामा सच्छायकलितरूपशोभा महाटवी त्यजन्ती यामिनीमतिवाहयामास ।

ततश्च परलोकगतपतिकाऽपि किमियमद्यापि जीवतीति समुल्लासितप्रचण्डदण्डं यमराजमिव भीषणमूर्ध्वीकृतशुण्डादण्डं वनवारणमपश्यत् ।

मुक्तापूर्णात्मकुम्भोऽप्युडुगणममलं वीक्ष्य मुक्तायमानं
लोभादादातुमिच्छन्निव गगनतले हस्तमुल्लास्य धावन् ।
चक्रे मत्तद्विपेन्द्रः प्रचलितवसुधः केलिशैलोपमानः
सद्यः शीलेन तस्या दिशि दिशि तरले चक्षुषी निक्षिपन्त्याः ॥२५६॥

तदनु पुनरग्रतो विक[3]टपादपातं धावन्त्या मणिरथ इव अनेकपापकारितां दधानः पञ्चाननः सभयतरलतारं निरैक्ष्यत ।

क्ष्वेडामात्रविसूत्रितद्विपघटापुच्छच्छटाछोटनाद्
धूताद्रि[2]र्धूत[4]केसरोऽजनि रुषा व्यात्ताननो यः पुरः ।

१. [महाटवीं कुलटामिव त्यजन्ती । महाटवी हि अनेकैः धवैः–वृक्षविशेषैः कलिता । वृक्षविशेषरूपाणां तिलकानाम् आलिका श्रेणिः तया सहिताम् । स्निग्धैः शोभाञ्जनैः वृक्षान्तरैरभिरामा सच्छाया ये कलितरवः–बिभीतकवृक्षास्तैरुपशोभा यस्या सा तथा ताम् । कुलटा तु अनेकैः धवैः भर्तृभिः कलिता सह तिलकेन–टिक्केन सतिलकाम्, स्निग्धशोभेन अञ्जनेन अभिरामाम् । सच्छायया कलितरूपस्य शोभया । अग्रेतनं 'पुरुषोत्तम' इत्यन्तं सुबोधम् ।]

'अनेकधवकलिताम्,' 'सतिलकालिकाम्'–एते द्वे विशेषणे कुलटा-अटव्योः । कुलटापक्षे अनेके धवाः तैः कलिता ताम् । अटवीपक्षे अनेके धवाः–'धव'संज्ञकाः वृक्षाः तैः कलिता ताम् । "पति-शाखि-नराः धवाः" [–अमर० का० ३, नानार्थव० श्लो. २०५ ]

कु० पक्षे तिलकानाम् आलिका तिलकालिका तया सहिता सतिलकालिकाम्, तिलकानि भालभूषणाय क्रियमाणानि विविधरूपाणि प्रतीतानि । अ० पक्षे तिलकसंज्ञाः वृक्षाः तेषाम् आलिका तिलकालिका तया सहिता सतिलकालिकाम् ।

२. [नवरम्–मणिरथः अनेकेषां पापानां लघुभ्रातृवधतद्वधूसंगाभिलापरूपाणाम् एनसां कर्ता, सिंहस्तु अनेकपानां–द्विपानाम् अपकारिताम्–अपकारकत्वं दधानः ।]

विकटपादपातं यथा स्यात् तथा, अर्थात् विकटपादपतनपूर्वकम् । अनेकपापकारिताम् । मणिरथपक्षे अनेकेषां पापानां कर्तृताम् । पञ्चाननपक्षे अनेकपाः–हस्तिनः तेषाम् अपकारिताम् ।

३. धूतः–कम्पितः अद्रिर्येन स धूताद्रिः अर्थाद् यः पर्वतमपि सकम्पं करोति स धूताद्रिः ।
४. कम्पितकेसरः ।

1 °धवलिता डे । 2 °लका खल । 3 °पातं ध्रुव° डे । 4 °द्रिर्धुतके° डे ।

दृष्ट्वा चाद्भुतपूतशीलशरभं तस्याः स्थितं मानसे
सिंहः सोऽपि ननाम पादकमलं भीतः स्वदासो यथा ॥२५७॥

कुत्रापि पुनरन्यत्र—

धूमस्तोमा यदीया बहुजलदघटाः स्फारतारस्फुलिङ्गा-
स्ताराकाराः पिशङ्गीकृतगगनतलाः विश्वसन्ध्याभ्रतुल्याः ।
शार्दूल-व्याघ्र-सिंह-द्विरद-मृग-शशत्राणहेतोरिवोच्चै-
स्तस्याश्चक्रे सतीत्वं तमपि वनदवं चित्रकर्मस्वरूपम् ॥२५८॥

व्रजन्ती च पुरस्तात् पुरुषोत्तममिव घनरुचिरतरङ्गोपशोभमानं सामोदकमलालङ्कृतं सच्चक्ररमणीयं सदानन्दकप्रभां बिभ्राणम्, परितोऽपि परिवेष्टितमपास्तरविकरप्रवेशेन साल-हिन्ताल-ताल-तमाल-सहकारप्रकारकारस्कराभिरामेण महाकाननेन पद्माकरमेकमैक्षिष्ट ।

प्रतिरजनिप्रतिबिम्बिततारकचन्द्रो विभाति यः कम्पात् ।
मथनभयादिव रत्नाकरस्त्वयं विजनवनलीनः ॥२५९॥

१. [ पुरुषोत्तमो नारायणः स च घनवद् मेघवद् रुचिरतरः—श्यामम् इत्यर्थः । गोपवद् गोभिर्वा शोभमानः, सामोदया—सानन्दया कमलया—लक्ष्म्याऽलङ्कृतः सन् शोभनेन चक्रेण सुदर्शनाख्येन रमणीयम्, सदा—नित्यं नन्दकस्य—खड्गस्य प्रभां बिभ्राणम्, पद्माकरं तु घनैः—प्रभूतैः, रुचिरैः—मनोहरैः तरङ्गैः—कल्लोलैः उपशोभमानम् । सामोदैः—सपरिमलैः कमलैः—पङ्कजैः अलङ्कृतम् । सद्भिः—शोभनैः, चक्रैः—चक्रवाकैः रमणीयम् । सदानन्द—नित्यहर्षं, कम्—पानीयं तस्य प्रभां बिभ्राणम् । अग्रेतनं 'तनयश्च' इत्यन्तं सुगमम् । ]

घनरुचिरतरङ्गोपशोभमानं, सामोदकमलालङ्कृतं, सच्चक्ररमणीयं, सदानन्दप्रभां बिभ्राणम्—एतानि चत्वारि विशेषणानि पद्माकरस्य तथा पुरुषोत्तमस्यापि—अत्र पद्माकरः (सरोवरम्) पुरुषोत्तमेन उपमीयते । पद्माकरपक्षे घनरुचिराः—मेघसमानसुन्दराः तरङ्गास्तैः उपशोभमानं पद्माकरम् । पुरुषोत्तमपक्षे घनरुचिः—मेघसमानकान्तिः रतरङ्गः—रते रमणे रङ्गो यस्य स रतरङ्गः, तथा उपशोभमानः, अथवा रतः—रमणं, रङ्गो नृत्यं ताभ्याम् उपशोभमानः एतादृशः पुरुषोत्तमः—श्रीकृष्णः प्रतीत एव । पद्मा० पक्षे सामोदानि-सुगन्धसहितानि कमलानि तैः अलङ्कृतम् । पु० पक्षे सामोदा-सुप्रसन्ना, कमला—लक्ष्मीः तया अलङ्कृतम् । प० पक्षे सद्भिः—शोभनैः चक्रवाकैः रमणीयं—मनोहरम् । पु० पक्षे सता—शोभनेन, चक्रेण—सुदर्शनचक्रेण रमणीयम् । प० पक्षे सदा अथवा सन् आनन्दः यस्या सा सदानन्दिका, सदानन्दिका चासौ प्रभा च सदानन्दकप्रभा, तां बिभ्राणम्, पु० पक्षे सदा—निरन्तरम् अथवा सन्—शोभनः नन्दको नाम असिः (तरवारिः) तस्य प्रभां बिभ्राणम् । "असिस्तु नन्दकः, विष्णोः असेर्नाम" [—अभि० का० २, श्लो १३६ ] ।

२ °कारस्कराः—वृक्षाः ।

३ दृश्यमानः पद्माकरः, पद्माकरो न, किन्तु मा केचित् पुनरपि मथिष्यन्ति इति भयात् स्वयं रत्नाकरः समुद्र एव विजनवनलीनः—एकान्ते जनरहिते स्थाने समागते वने लीनः, किम्? अर्थात् पद्माकरः—सरोवरम् अतीवविशालं समुद्रभ्रान्तिं जनयति इति भावः ।

1 दृष्टवेयाद्भुतभूत° खल । 2 °तारस्फु° डे । 3 °तरुचिश्च स° खल ।

भाति यदन्तर्लीना सुविकटतटघटितपादपच्छाया ।
क्षारजलोद्विग्ना स्वादु पातुमिव वारिवनलेखा ॥२६०॥

सर्वाभिर्भवतोऽङ्गसङ्गमसुख दोषाभिरासाद्यते
नैव क्वापि मयैकया वद विभो ! कस्मान्निमित्तादिति ।
य प्राप्ता तुहिनांशुमण्डलमुपालब्धु वनश्रीमिषा-
देषा कैर्न विभाव्यते वनकुहू पुष्पस्फुरत्तारका ॥२६१॥

तस्य च वनस्य मध्ये मध्याह्नसमयमासाद्य खेदविनोद विधाय कृतहस्तपादादिशौचा देवगुरुस्मरणपूतान्त.करणा भवान्तरनिर्मितदुष्कर्मलताफलानीव स्वयमेव परिपाकमुपागतानि वनफलानि क्षुध प्रशमनाय भुञ्जाना निजहृदयं संबोधयामास ।

आत्मस्ता सरसा पुरा रसवतीमासाद्य लोकोत्तरा
भुञ्जानस्य सुहृज्जनस्य मधुरालापामृतैर्वर्णिताम् ।
कि भोक्तव्यमिद फलादि विरस निन्द्य मयैकाकिना
मा कार्षीरिति दैन्यमास्पदमसि त्व सापदा सपदाम् ॥२६२॥

भोजनानन्तर च ससारस्वरूप भावयन्त्यास्तस्या देहश्रममपनेतु संवाहिकेव समाजगाम त्रियामा । तया च प्रतिबोधिता निरस्तान्धकारा महौषधीदीपिका । मार्गश्रमातिरेकेण महाभयङ्करव्याघ्र-सिंहादिखरनिनादमाकर्णयन्त्यपि पल्लवैर्विरचितसमुचितशय्या कृतसाकार-प्रत्याख्याना भवविलसितावज्ञा दत्तावधाना सुखमिव सुष्वाप । अर्द्धरात्रसमये च तस्या. विजृम्भित नितम्बबिम्बेन,[3] स्फुरितं[4] सवेदनेन नाभिमण्डलेन, समुल्लसितं दारुणैरुदरशूलै, स्तम्भितमूरुयुगलम्, विदलितुमारब्धान्यङ्गानि, कम्पितं हृदयेन, मुकुलित लोचनाभ्याम्, प्रवृत्त जृम्भिकाभि ।

ततश्चिन्तितमनया—हन्त ! किमिदानीमेवानयाऽनुचिताहारविहारजनितया शरीरवेदनया सकलोऽपि मम चरणपरिणाम सहृत्य विफलता नेष्यते ? न सम्पत्स्यते [5]स्वगुरुदर्शनामृता-सारेण सफलो मृत्युसमय । ततश्च स्मृतमेतया नूनमासन्न. प्रसवसमय , ततो भवितव्य-

१ यत्र पद्माकरे तटस्थिना विकटा पादपच्छाया अन्तर्लीना भाति, उत्प्रेक्ष्यते—सा छाया न, किन्तु क्षारजलपानेन उद्विग्ना सती मधुरं जलं पातुं समागता, वारिवनलेखा—मेघलेखा सा इति भाव ।

२. दोषाभिः—रजनीभि ।

३. वनकुहू—वनरूपा अमावास्या ।

1 दीपशिखा, मा° डे। 2 पल्लवल्लवि° डे। 3 °बिम्बे, स्फु° ख। 4 सवदनेन डे 5 स्वगुरुपदे° डे।

मिदानीं प्रसवेन, सोढव्यं विषयसुखजनित प्रत्यक्षनरकदुःखफलमिति । धीरोचितधीरोचित-साहसाया. सहसा पूर्वस्या इव सहस्रकिरणस्तस्या समजायत देवकुमाराकार. कुमार. । जाते च तस्मिंस्तदानीं तथाभवितव्यतयाऽस्ताचलचूलिकयेव कवलिते विवेकभास्करे समुल्लसिते महामोहतमःपटले पतिमरणोपलब्धावकाशेन लब्धावकाश शोकनिशाचरेण कदर्थिता मदनरेखा प्रलपितु प्रवृत्ता । तद्यथा—

तनय वनदेवताः ! स्वय युगबाहोः किमिम न पश्यथ ? ।
ननु गच्छत तस्य सन्निधावभिधायाऽऽप्नुत पारितोषिकम् ॥२६३॥
यदि सन्निहितो भवेदसौ यदि दास्योऽपि मम प्रियंवदा. ।
किमरण्यमिद न धारयेदधिका राजकुलादपि श्रियम् ॥२६४॥
युवराज ! विलोकयात्मज नयने पायय पाययामृतम् ।
परिभावय चेतसा स्वय सुरलोकेऽपि सुतोत्सवोऽस्ति किम् ॥२६५॥
तनयोत्सवमेत्य कारय त्रिदशस्थानमितोऽसि यद्यपि ।
ननु पुत्रमुखाम्बुजश्रिया पुरत सापि सुधा वराकिका ॥२६६॥
तनये गर्भगतेऽपि य पुरा परम कारितवान् महोत्सवम् ।
अनुरज्य स नन्दनेऽपरे न च त जातमवीक्षसेऽधुना ॥२६७॥
यदि सम्प्रति विस्मृताऽस्म्यह ननु बालकोऽपि किमेष विस्मृत· ।
त्वममुष्य मुख निरीक्षितु यदभूरुत्सुकमानसो नहि ? ॥२६८॥
जगतोऽप्यभय ददौ पिता भवतो दोहदतोऽपि बालक ! ।
भवता तु न सोऽपि रक्षितस्तत् किं वत्स ! वदामि साम्प्रतम् ॥२६९॥
इति दु सहशोकपीडिता प्रलपन्ती युगबाहुवल्लभाम् ।
अवलोक्य निशा सतारका विलय प्राप शुचेव लज्जया ॥२७०॥
पुनरुदयमुपागते विवेके प्रशमवशेन शुचामबुध्यतैषा ।
उदयति सहसा सहस्ररश्मौ क्षयसमयेन निशा सरोजिनीव ॥२७१॥

१ [ नवर धीरस्योचितं धिया—बुद्ध्या रोचित—शोभितम् । ]
धीराणाम् उचित तथा धिया रोचित साहस यस्या· ।
२. °स्थानम् इतोऽसि—गतोऽसि—प्राप्तोऽसि ।
३ अभूः त्वम्—अभू । त्वम् उत्सुकमानसो नहि अभू ? ।
४ शुचा इव—शोकेन इव ।

1 विषयसुरतज° डे। 2 नरकफल° खल। 3 °साहसया स° ख। 4 कलिते खल। 5 न तु गच्छत त° ख। 6 °वमेव क° खल। 7 °से बुधै° डे। 8 रक्षत° खल।

ततश्च

सैवृत्तेन दिवाकरेण गुरुणा लोकं विधायाग्रतो
ध्वान्तस्निग्धशिरोरुहैर्निजकरव्यापारतो लुञ्चितैः ।
प्रात श्रीविशदा वरश्रियमधाद् दोषान्धकारोज्झिता
भव्यानामनुमोदनीयचरिता सद्धर्मलाभप्रदा ॥२७२॥

प्रैभातसमये तदा स्यति तमो-ऽमरालीप्रभु
निवेशयितुमुत्सुकश्चरणरङ्गरम्य हृदि ।
प्रवुद्धकमलाकरो भ्रमरनिर्गमव्याजतः
परित्यजति सर्वतः कुमतवासनाकुग्रहम् ॥२७३॥

तदनु च प्रभातकरणीयस्मरणपूर्वकसम्बोधनेन प्रक्षाल्य सकलशोककलुषमन्तःकरणम्, देवशरण च निधाय युगबाहुनामाङ्कितमुद्रालङ्कृतकरारविन्द कम्बलरत्नप्रच्छादितशरीर कदलीलतागृहमध्ये सर्वस्वमिव बालकम्, प्रसवसमयाऽपवित्रवस्त्रशरीरप्रक्षालनायाऽवतीर्णा सरसि महार्णव इवारविन्दालया समाश्लिष्टा तेन तरङ्गहस्तेन, प्रक्षाल्य च वस्त्राणि यावदङ्गोपाङ्ग-

१ [ सद्वृत्तेन इत्यादिवृत्तम्—सद्वृत्तेन—सुशीलेन, वर्तुलेन च । गुरुणा—धर्माचार्येण । लोकम् आलोक च ध्वान्तमेव स्निग्धाः शिरोरुहाः—केशाः । करव्यापारः—हस्तप्रचारः, किरणविस्तारश्च । विशदाम्वरश्रीः—श्वेताम्वरशोभा, निर्मलाकाशसपद, दोषाः—प्राणिवधादयः त एवान्धकारः—रजनीतामसं च शेष स्पष्टम् । ]

वृत्तसहितेन—वर्तुलाकारेण सदाचरणसहितेन वा दोषान्धकारोज्झिता—दोषायाः—रात्र्याः, अन्धकारेण उज्झिता ।

२ [ प्रभातेत्यादिवृत्तम—प्रभातसमये तमः—अन्धकारं, स्यति—छेदयति सति, चरणयोः—पादयोः, रङ्गेण—रक्ततया रम्यम । मरालीप्रभु—हंस हृदि निवेशयितुम—आत्मनि स्थापयितुं प्रवुद्धकमलाकरः—विकस्वरपद्मसरः कर्ता, अन्यत्र च रणरङ्गेन रम्य—चारित्राभिलाषेण रमणीयम । अमरालीप्रभु—जिनं हृदि निवेशयितुमुत्सुकः । प्रवुद्धः धर्ममार्गे इति गम्यते । शेषमर्पितार्थम् । ]

तमः स्यति—छिनत्ति—नाशयति । अमरालीप्रभु—हंसम । कुमुदः—कुमुदस्य वासनारूप कुग्रहम्—कुमुदनिवासप्रियताम्, अथवा कुमुदः—कुदर्पस्य—पापजनकदर्पस्य वासनाकुग्रहम्—कदाग्रहम् ।

अत्र 'स्यति' एतत् 'सो' धातोर्दैवादिकस्य वर्तमानकालस्य तृतीय-अन्य—पुरुषस्य एकवचनम स्यति, स्यतः, स्यन्ति—इत्यादि ।

अत्र 'तमोऽमरालीप्रभुम्' इत्यस्य 'तमः मरालीप्रभुम' तथा 'तमः अमरालीप्रभुम्' इत्येवं पदविभागो द्विधा ।

उत्सुकश्चरणरङ्गरम्यम् अस्य एव पदविभागः—उत्सुकः चरणरङ्गरम्यम्, चरण—चारित्रम्—संयम, तथा चरणाः—पादाः । हंसस्य पादाः रक्तेन रागेन रम्या इति प्रतीतम् ।

1 प्रत्याख्याय स° स्वल ।

शौचमाचरितुं प्रारभत तावदकस्माद्देवाञ्जनशैल इव जङ्गमः, पीतजलो जलधर इव निमज्ज्योन्मग्नः, कलिकाल इव मूर्तिमान् समुत्तुङ्गस्ततः समुच्छलितो महाभयङ्करो जलकुञ्जरः। तमालोकयन्त्यास्तस्याः साध्वसवशवेपमानमानसायाः स्तम्भिताबूरू, प्रस्विन्नमखिलमप्यङ्गम्, तरलिते लोचने, विमूढं[1] चित्तम्। तदनन्तरमेव दूतिकोदितकुमततिरस्कृतिप्रवचनपुरस्कार-दम्पतीप्रसूतेन समुद्दामकामग्रहग्रस्तमतिभूपतिमत्तमातङ्गभज्यमानाभिरामपतिव्रताव्रतारामरक्षाक्षीरपूरधापितेन तदपन्याय[2]प्रभवभविष्यदन्योऽन्यबान्धवविरोधनिरोधनिमित्त[3]मौनप्रतिपत्ति-स्नापितेन गर्भप्रभावप्रादुर्भूताऽभयप्रदानप्रमुखदोहदसम्पत्तिमण्डितेन प्रहारोपस्थापितसहार-प्रियतमापथ्यानरोधक[4]सद्बोधहेतुसद्देशनाक्रीडितेन परमपातकात्मघातका[5]भियोगनिवृत्तिवितीर्ण-निजोत्सङ्गेन क्रमनिवृत्तबालभावेन समासादितशुभपरिणामतारुण्येन पुण्यपुरुषेणेव 'किमियमिह[6] वने वनेचरी क्लेशमनुभवति, सदेहापि स्वर्गाङ्गणभूषणसमुचितेयम्' इति संप्रधारयता गृहीत्वा हस्तेन तेन कुञ्जरेण समुत्क्षिप्या गगनाभिमुखम्।

'निर्वाणपदकारणसमस्तदुर्गतिवारणचरणशुश्रूषापरायणविरतिप्रतिचा[7]रिकाविहीना दीनायमाना स्वर्गवसतिः' इति तामनिच्छन्तीव पुनरापतितुमारब्धा। तस्मिश्चावसरे दुर्घटघटनाघटनपटिष्ठभवितव्यतावशेन तस्य पद्माकरस्योपरि तत्कालमेव सञ्चारिणा विद्याधरेण पतन्ती ध्रियते स्म। धृत्वा च नीता विद्याधरालयं वैताढ्यशिलोच्चयं रुदती सकरुणं व्याहृता च—

यत्रागत्य सुरासुरप्रियतमा नित्यं रमन्तेतरा-
मारामेषु सह प्रियैः[8] प्रमुदितैः सत्यप्यहो! नन्दने।
स्वर्गाय स्पृहयन्ति नैव सुधियो यत्र स्थिताः खेचराः
वैताढ्यं गिरिराजमद्भुतनिधिं बाले! तमालोकय ॥ २६८ ॥

इह स्थितानां न स्वर्गापवर्गावपि दुर्लभौ, स्वर्गस्थानां[9] तु तिर्यक्त्वं नरकत्वं[10] वा परं भवेत्। निरीक्षमाणेन च तामदृष्टपूर्वलावण्यादिगुणराजधानीं चकितविलोचनां चिन्तयाचक्रे—

साक्षादेव दिवः पतत्यत इयं दिव्याकृतिः स्ववधू-
र्नेत्रोन्मेषवतीति मर्त्यवनिता याता कथं स्वर्गतः।
स्वस्त्रीभ्योऽप्यधिकेत्यसौ दिविपदा नेतुं दिवं प्रस्तुता-
ऽनिच्छन्ती त्वपतत् ततो मम करे प्राप्ता परं पुण्यतः ॥ २६९ ॥

1 विमूढितं चित्तं क। 2 °पन्नाय ख। 3 °त्तप्रति° ख। 4 °थ्यानारो° ख। 5 °कापयो° ख। 6 °मिह वनेचरी खल। 7 °चारका° ख। 8 प्रियैः समु° खल। 9 °नां सुति° ख। 10 नरत्वं खडे।

लावण्ययौवनकलारुचिरूपलक्ष्म्या
नैतादृगस्ति रमणी त्रिदशालयेऽपि ।
पश्यन्निमामवनिमण्डलरत्नमेकं
तस्मादुपाक्रमत कोऽप्यमरोऽपि नेतुम् ॥ २७० ॥

इति मदनमदनदीनेन नीयमानमानसोऽपि 'का इयम् ?' इति परमार्थेनावधारित-तदवस्थः स्वचरणतामरसनिवेशितनयनषट्पदा भामिनीमिव तामुवाच—

नीरसहितेन सरसा हसवलेनावलापि सत्यसता ।
न जडाशयेन पाता मातङ्गकरे चटन्तीति ॥ २७१ ॥
तव कमलिन्या युक्तो न-वकोपश्लेष एष कमलाक्षि ! ।
युक्तावस्थितिरपि सुतनु ! राजहंसेन केनापि ॥ २७२ ॥ युग्मम् ।

ततश्चिन्तितमेतया—"धिगिदं सकलानर्थलतामूलं शीलप्रकाशप्रतिकूल विपदन्धकूपं मम रूप येनासावपि वराको मणिरथ इव छलितः सम्भाव्यते । किमिदानीं करोमि ? किं त्राणमनुसरामि ? सत्यमाकाशपतितैवाहं तथाप्यात्मानमेन च दुर्गतिगर्तायां पतन्त यदि रक्षामि तदतिसुन्दरं स्यात्" इति चिन्तयन्ती तमवोचत्—

१. मदनेन—कामेन यज्जात मदनम्-हर्षस्य आवेशः, तेन मदनमदनेन यो दीनस्तेन ।

२. [अग्रेतन नीरसहितेत्याद्यार्याऽर्वाक् प्रकटार्था—नीरसेभ्यो हितेन, अहं तु सरसा, सवलेन—सामर्थ्येन, अहं तु अवलाऽपि, असता—अशिष्टेन, अह तु सती—शोभना। एवंविधेन जडाशयेन—मूर्खमनोवृत्तिना, मातङ्गकरे—चाण्डालहस्ते चटन्ती, न पाता—न रक्षिता इति कारणात् ।]

नीरसहितेन—पानीययुक्तेन, सरसा—सरोवरेण, हंसाना बलं यस्य तेन हसवलेन, जडाशयेन—जडेन जलाशयेन वा पानीयाधारेण, असता—अशिष्टेन, मातङ्गकरे जलहस्तिशुण्डाया चटन्ती अवलाऽपि—असमर्थाऽपि । अथ च युवतिरपि सती न पाता—न रक्षिता इति हेतोः ।

३. [हे कमलाक्षि ! एष नवस्य—नूतनस्य, श्लेष—सवन्धः तव कमलिन्या पद्मिनीवन्मनोहरा [तस्या] युक्तः—संगतः । सुतनु !—शोभनशरीरे ! तवावस्थितिरपि केनापि राजहसेन प्रधानेन राजा सह युक्ता । अस्मादृशः कोऽपि राजा तव भर्त्ता युक्त इत्यर्थः । तव कमलिन्याः—पङ्कजिन्याः, हे कमलाक्षि ! कमलवदक्षिणी यस्यास्तस्याः सवोधनम् । वकस्य उपश्लेषः—आलिङ्गनम्, हे सुतनु ! न युक्त । केनापि राजहस-मरालप्रधानेन सह अवस्थितिरपि युक्ता । 'चिन्तितं मदनरेखया' इत्यन्त स्वयमभ्युह्यम् ।]

हे कमलाक्षि ! कमलिन्याः—कमलिनीरूपायाः तव वकोपश्लेपः—वकसवन्धः न युक्तः । हे सुतनु ! तव केनापि राजहसेन सवन्धो युक्तः इति अवस्थितिः युक्ता—एवंप्रकारा व्यवस्था उचिता । अत्र 'न—वकोपश्लेषः' इत्यस्य द्विधा पदविभागः—नवक+उपश्लेषः । नवकः—नवीनः । न+वक+उपश्लेषः । वको नाम जलचरः 'वगला'नाम्ना भाषाया प्रतीतः । अत्र वकार-वकारयोः ऐक्य बोध्यम् ।

1 नव क स्व । 2 किं शरणम° लङे ।

'यदि त्वं सकलमपि संसारस्वरूपं परदारपरीरम्भलालसमानसानां ध्रुवं नरकपातं च श्रद्धालुरसि ततः परवधूनिरीक्षणे तन्द्रालुर्निद्रालुश्च भूयाः । सम्पद्यस्व मयि दीनायां दयालुः, मा पुनर्दुःशीलबुद्ध्या ध्यायन्नपि गृहयालुः पतयालुरेव नरककोटरे भविष्यति । त्वया तावदिह पद्माकरे पतन्तीं त्रायमाणेन जीवितं दत्तमिदानीं तु शीलापहारापदेशेन तदपहर्तुमेव प्रारभ्यते । तदेतत् सकलमेवानुचितं सत्पुरुषाणाम् ।

जीवितं शीलमेवैकं कुलीनस्य क्षमातले ।
यतः शीलविहीनानां जीवितव्यकथा वृथा ॥ २७३ ॥

अपि च, अहमद्य रजन्यां तत्र सरस्तीरे बालकमजीजनम्, तं च निजजीवितमिव तत्रैव कदलीलतागृहे निवेश्य शरीरादिक्षालनार्थं सरसि प्रविष्टा सती समुत्क्षिप्ता नभसि वारणेन, समानीताऽत्रभवता । स च बालको व्यालादिगोचरगतो वा स्तन्यविरहितो वा स्वस्यैव ममापि जीवितकथां समापयिष्यति । तद् अपत्यभिक्षाप्रदानेनातिथेयीं[2] मह्यमतिथये करोतु महाभाग !,[1] समर्जयतु पुण्यराशिं, तनोतु कुन्दावदातामात्मनः कीर्तिम् । यतः—

तनोतु कीर्तिं शरदिन्दुशुभ्रां पुण्यश्रियं चार्जयति प्रकामम् ।
येनेह लोके च भवान्तरे वाऽनुकम्पया प्राणिगणस्य धीरः ॥२७४॥

किं[2] बहुना ? 'यदि मां जीवयितुमिच्छसि[3] तदविलम्बमेव तं बालकं वा समानय, नय-[4] निधे ! मां वा तत्र नय' इति व्याहरन्तीमम्बरचरचक्रवर्ती व्याजहार—

'सुन्दरि ! सर्वथा यदि मां भर्तारं प्रतिपद्यसे तदा तवादेशकारी भवामि । अपरं च, गन्धारजनपदालङ्कारायमाणे रत्नावहे नगरे मणिचूडाभिधो विद्याधरेन्द्रो बभूव । कमलावती च तस्य राज्ञी । तयोश्च तनूजो मणिप्रभोऽहम् ! मणिचूडस्तु द्वयोरपि श्रेण्योराधिपत्यमस्खलितं पालयन्नपि गतः परमं वैराग्यम् ।

कुलमखिलमरीणां हेलया ध्वंसयित्वा
विषयसुखमशेषं स्वेच्छया मानयित्वा[3] ।
तृणमिव पटलग्नं भग्नकन्दर्पदर्पो-
ऽत्यजदभजत दीक्षां मोक्षकाङ्क्षैकतानः ॥२७५॥

१. अत्र 'सकलमपि संसारस्वरूपं विदुः' इत्येवं वाक्यं भवेत् । विदुः—ज्ञाता ।
२. आतिथेयीम्—आतिथ्यम् ।
३. मानयित्वा—अनुभूय ।

1 महामतिकथयेव क० खल । 2 ततः यदि खल । 3 जीवितु° ख । 4 समानय निधेहि मां खल ।

तदनुमतामुपेत्य राज्यलक्ष्मी-
मनुपरिपाटिगता दधाम्यहं ताम् ।
क्वचिदपि पुरुषोज्झिता महेला
न भवति सौख्यपदं कदाचिदेव ॥२७६॥

स पुनश्चारणश्रमणो मां वन्दयितुमतीते वासरे ग्रामाकर-पुराकीर्णा वसुन्धरा विहरन्निहाजगाम । साम्प्रतं तु चैत्यवन्दनाय नन्दीश्वरे विजहार । मया तु तत्समीपमद्य गच्छता कृशोदरि ! त्वमासादिताऽसि । तत. सकलविद्याधरीचक्रचूडामणिचुम्बितचरणतामरसा मामधिपतिं कृत्वा सम्पद्यस्व । दिव्यविमानारूढा [3]प्रौढानन्दनेन मया नन्द्यमानाऽनेकाश्चर्यकलिता सशैलद्वीपसागरां सकलामप्यचलां विलोकयन्ती सकलोत्सवानामुपरि वर्तस्व । मृगाङ्कमुखि ! तनयस्यापि कामपि चिन्तां मा कृथाः । सर्वथा धीरा भव । यतः, स दुष्टतुरङ्गापहृतेन विदेहजनपदैकस्वामिना मिथिलाधिपतिना समासाद्य 'अनवद्यलक्षणलक्षिताङ्गः' इति समादाय समर्पितो महादेव्या., वर्तते च पञ्चधात्रीभि परिपाल्यमानः सुखं सुखेन । न चैतदन्यथा चिन्तनीयम्, यतः प्रज्ञप्तीमहाविद्याप्रसादेन करतलकलितमामलकीफलमिव कलितं मयेति तनयविषयामधृतिं न कर्तुमर्हसि । किं बहुना—

तनु सुतनु ! मनस्ततः प्रसन्नं
परिहर कातरतां कुरङ्गनेत्रे ! ।
पुनरपि न गतेति यौवनश्री
सफलयतामधिगम्य नायकं माम् ॥२७७॥

ततश्चिन्तितं मदनरेखया—
मुक्तिपरमार्गलाभा. सभवानीहावरागतद्वेषा. ।
आराध्या गुरुबुद्ध्या न-रमण्य परमनिर्वृतिनिमित्तम् ॥२७८॥

१. वन्दयितुम्—वन्दनं कारयितुम् ।

२. [ मुक्तिपरेत्याद्यार्या—मुक्तेः—सिद्धेः, परमा—प्रकृष्टा, अर्गलाभा—अर्गलासदृशा, भवान्याः—गौर्या, हावैरुपलक्षितो रागः भवानीहावरागः । स च तद्वेषश्च—तन्नेपथ्यं च तौ तथा । सह भवानीहावराग-तद्वेषाभ्यां वर्तन्ते सभवानीहावरागतद्वेषाः एवंरूपा रमण्यः—स्त्रियः, गुरुबुद्ध्या—गुर्व्या मत्या, न—नैव, आराध्या । या परं—प्रकृष्टम् अनिर्वृतिनिमित्तमसुखकारणम् । नरमण्य.—पुरुषरत्नानि, परमनिर्वृतिनिमित्तम्—मोक्षहेतुः, अत एव गुरुबुद्ध्या धर्माचार्यादिभि प्रायेण आराध्याः—सेव्याः । मुक्तेः परः—प्रकृष्टो मार्गलाभो तेभ्यः सकाशात् ते । सह भवस्य—संसारस्य अनीहया वर्तन्ते इति सभवानीहाः—वराः—प्रधाना., गतद्वेषाः—निर्द्वेषा इत्यार्यार्थः । अग्रेतन 'नरकेषु निपतन्ति' इत्यन्तं स्वयं विचार्यम् । ]

1 °मतिमुपेत्य डे । 2 ततो विद्या° डे । 3 प्रौढानन्दा मया खलु ।

इत्याद्युपदेशानामयमुद्दामकामः प्रथमोत्पन्नज्वरार्त्त इवौषधानामयोग्य एव। यतः—

तावन्मानयतीह[1] जातिममलं[2] तावत् कुलं प्रोन्नतं
धत्ते चेतसि तावदिच्छति परामात्मप्रतिष्ठामपि।
तावन्नीतिपथप्रथा प्रथयते तावच्च धर्मैकधी-
र्यावन्न प्रतिहन्यते स्मरशरैर्वीरो[3]ऽपि विद्वानपि ॥२७९॥

एवं स्थिते साम्प्रतं तावत्—

अहमिममनुकूलयामि वाचा
यदि किल कालविलम्बमेव दत्ते।
बलवति यदुपस्थितेऽनभीष्टे
घटयति येन[1] स एव साध्यसिद्धिम् ॥२८०॥

इति निजमनसिकृत्य मदनरेखा व्याजहार—

"महाभाग! यद्येवमाग्रहस्ते ततो दर्शय तावन्नन्दीश्वर-मुनीश्वरलक्षणं तत् तीर्थद्वितयं येन तद् दृष्ट्वा नत्वा[4] च पवित्रयामि नेत्र-शिरसी। त्वमपि यदात्मने रोचते तद् विदधीथाः।

स च समाकर्ण्य कर्णामृतमिव तद्वचनमनिमिषलोचनविलोकनीये वैक्रिये[5] विमाने तदा[6] त्वरितमेव समारोप्य नीता सा तत्र तीर्थे। ततो विमानात् संसारादिवोत्तीर्य प्रमोदसम्पदालिङ्गितेन मनसा द्राक्षारससम्बन्धबन्धुरेण ध्वनिना धाराहतकदम्बकुसुमानुकारिणा पुलकितशरीरेण तया मदनरेखया भावसारमेव शाश्वतीरशेषा अपि सानन्दमृषभ-वर्द्धमान-चन्द्रानन-[7]वारिषेणनामधेया जिनेशप्रतिमा अर्चिता वन्दिता इत्थं स्तुताश्च—

अत्र प्रयुक्तानां समासमुक्तवाक्यानां पदच्छेदः एवम्—

(१) मुक्तिपरम+अर्गलाभा रमण्यः।
मुक्तिपरमार्गलाभा नरमण्यः—नरश्रेष्ठाः।

(२) स+भवानी+हाव+राग+तद्वेषाः रमण्यः। वेषो नेपथ्यम्।
हावः नारीचेष्टाविशेषः।
स+भव+अनीहा+वरा+गतद्वेषा नरमण्यः।
भवस्य अनीहा तया सहिता सभवानीहाः।

(३) न रमण्यः।
नरमण्यः।

(४) परम्+अनिर्वृतिनिमित्तम् रमण्यः।
परम+निर्वृतिनिमित्तम् नरमण्यः। निर्वृतिः—निर्वाणम्।

१. सः कालविलम्बः।

1 यावन्मा° डे। 2° मल ता° ख। 3 °शरैर्धीरो° ख! 4 नत्वा पवि° डे। 5 वैक्रियवि° डे। 6 °दा त्वरमेव डे। 7 °मृषभ-चन्द्रानन-वारिषेण-वर्धमाननामधेयाः डे।

जिन! दिनसमारम्भे भानूदयादुदयाचल–
स्तिलककलितो यत्सञ्जातस्तथा विमलाम्बर. ।
निरवधिविधिश्राद्धस्पर्धानुबन्धनिबद्धधी–
स्तदयमधुना शुश्रूषा ते चिकीर्षुरिवेक्ष्यते ॥ २८१ ॥

क नु समुचिता लब्धोल्लासा सदोपतया वय
समुचिततमः पूजाकर्मण्यसौ तु जिनेशितु' ।
त्रिभुवनगुरोस्ताराबृन्दैरितीव दिनोदये
सपदि सकला लक्ष्मीः पद्माकरस्य समर्पिता ॥ २८२ ॥

विहितकरविस्तारस्ताराभिरामसिताम्बुज–
प्रकरमकृताऽसङ्ग स्फीतान्धकारमधुव्रत ।
गगनसरसः प्रात काले यदेष समाददे
दशशतकरस्तत् ते पूजा जिनेश! विधास्यति ॥ २८३ ॥

कृतपदमिद मध्ये यस्मात् कलङ्कमधुव्रतै–
र्विदधदमुना पूजामाशातना विदधे कथम् ? ।
परिहृतमतश्चन्द्रश्वेताम्बुजं रविणा प्रभो! ।
कथमपरथा विच्छायत्व प्रगेऽवतनोत्यद ॥ २८४ ॥

भुवनमखिल हित्वा मीनध्वजस्य सुहृत्तमोऽ–
स्तमयमयते नेन्दु स्वामिन्नुलूकदृशा सह ? ।
उदयति रवौ किन्तु [2] स्मृत्या मुखे तव वीक्षिते
सुकृतमनसा कालक्षेपो[3] विमूढधिया युत ॥२८५॥

रजनिरजनि क्षीणा रीणा प्रमादकथाप्रथा
प्रभवति महाऽऽलोको लोकप्रबोधसमृद्धये ।
[4] अपसर तमस्तूर्णं पूर्णं त्वया जड ! तेऽधुना
जिनपतिमुख स्मारं स्मार पुर. पटु ते भव ॥२८६॥

कमलमुकुलै. सार्धं नेत्रे समाश्रयत श्रिय
मुखमनि[5]मिप भूत्वा तीर्थेशितुर्ननु [5] पश्यतम् ।

1 °गुरो तारा° खल। 2 स्मृत्या मु° ख। 3 °पोऽन्तरायसमन्वितः डे। 4 अपसरत त° ल। 5 °मिपे भूत्वा खल।

निरुपमतमप्रज्ञादाने प्रसीद सरस्वति !
स्तवनविषय येनैतन्मे भवेत् प्रतिवासरम् ॥२८७॥
दिनमिदमहो धन्य पुण्य तथैतदहर्मुखं
जिन ! पुनरिय वेला वेला प्रमोदमहोदधे. ।
तव पदयुग दृष्ट्वा यत्र स्मृतिस्तुतिलोचनै-
र्मम विकसित स्पर्द्धाबन्धाद् महोदयसम्पदा ॥ २८८ ॥
मदनदमन ! स्वान्त कान्त विधाय तवानने
स्तवनमिति यः प्रातः प्रातः पठत्यशठाशयः ।
स भवति महानन्दस्थान सदा जिन-भद्रधीः
प्रकटितगुणग्रामारामो भवानिव श्रीधन. ॥ २८९ ॥

नमस्कृत्य च भगवन्त मणिचूडचारणमुनि तदाशीर्वादसञ्जातपरितोषौ द्वावपि समासीनावग्रतः ।

मुनिनाऽपि मन.पर्यय[1]ज्ञानबलावलोकिताखिलतन्मनोऽभिप्रायेण सजलजलदस्तनितसोदरेग वचसा प्रस्तुता देशना—

इह सकलपापमूल शूल निःशेषशुभविपाकानाम् ।
नि.सारतापुरस्कृतसकलतुषं हन्त ! विषयसुखम् ॥२९०॥
विषयसुखैर्हृतमनसा पुसा नाकृत्यमस्ति किमपीह ।
यस्मादित एवाधमतमा भवन्तीह भवचक्रे ॥२९१॥
य· परिहृतनिजकान्तः शान्तमना ब्रह्मचर्यवर्यतमः ।
त्यक्तसमस्तावद्यः स उत्तमः सकल[2]भुवनेऽपि ॥२९२॥
मध्यम-उत्तमपथधी स्वदारसन्तोषरुद्धघनदोषः ।
शेषा रमणी [1]तक्षकशिरोमणी वीक्ष्य सभयो यः ॥२९३॥
[2]फे[3]लामिव पररमणी रमणीयामपि न यः परित्यजति ।
अवगणयन् सकला स्वा कमलामवला च स निकृष्टः ॥२९४॥

१. तक्षको नाम महानागः तस्य शिरसि वर्तमाना या मणी तत्समा परमरमणीं वीक्ष्य। न हि तं मणि कोऽपि स्प्रष्टु शक्नोति, एव पररमणी अपि अस्पृश्या एव मन्तव्या ।

२ फेलामिव–उच्छिष्टमिव–भुक्तसमुज्झितमिव । " अथ भुक्तसमुज्झिते "–" फेला पिण्डोली-फेली च "—[–अभि० का० ३, श्लो० ९०, ९१ ]

1 °पर्यवज्ञान° ख । 2 °ल्भवनेऽपि ङे । 3 फलमिव खल

अधमतमास्ते पुनरिह परदारेष्वपि निवद्धमतयो ये ।
स्वकुल कलङ्कयित्वाऽवश्यं नरकेषु निपतन्ति ॥२९५॥

तावदिह चित्तसरसी स्वेच्छाऽनावाधसत्त्वधामाऽपि ।
परदारमत्तमातङ्गमण्डलो विशति नो यावत् ॥२९६॥

यो वा ता सरसामपि कान्तामन्येन भुक्तपूर्वतया ।
स्पृहयति हि रसवतीमिव ज्ञेयो वेश्वानर· स खलु ॥२९७॥

वामः कामः सकलोऽपि किं पुनर्नाम परवधूविषयः ।
विषम विषमपरमपीह कालकूटस्य कैव कथा ? ॥२९८॥

किञ्च, निरवग्रहविग्रहपरे यस्मिन् महौजसि परमहोमया गोपायोचितविस्मृतमन्त्रया द्विजातिमालयेव महेश्वरोऽप्याकुलीकृतः प्रियतमया, सोऽपि यावदेव परवधूपराङ्मुखान्तः-

१. [ 'तावदिह' इत्यादौ—एकत्र सत्त्वाः–जलजन्तव , अन्यत्र अवष्टम्भः । ]
मातङ्गमण्डलः–चाण्डालश्वा ।

२. [ वैश्वानर –अग्नि , 'वै 'शब्दः पादपूरणे । श्वा–सारमेयः स नरः । अग्रेतन 'किञ्च' इत्यन्तं सुगमम् । ]

रसवतीपक्षे वैश्वानरः–अग्निः । कान्तापक्षे वै श्वा नरः–स नरः खलु श्वा अर्थात् स नरः न नरः किन्तु श्वा एव ।

३. [ निरवग्रहे इत्यादि–यस्मिन् रावणे महौजसि महावले निरवग्रह–दुर्ग्रह यद् दुर्ग–कैलासरूप तत्रैकाग्रहविग्रहपरे क्व ? चित्ते उत्पाटननिष्ठे सति । परमह· तेनोपलक्षितया उमया–गौर्या, प्रियतमया–भार्यया, महेश्वरः–हरोऽपि आकुलीकृतः–कैलासोत्पाटने भीता गौरी हा किमेतदिति महेश्वरकण्ठे लग्ना इत्यर्थः । किंविशिष्टया ? गोपाये चिताः–रक्षणविचक्षणाः स्मृताः मन्त्रा· यस्याः सा तथा तया । द्विजातिमालया तु परमहोम-यागयोः उचिता विस्मृताः मन्त्राः यस्याः सा तथा तया । सोऽपि अक्ष –अक्षाख्यस्तनयः–पुत्रो यस्य सोऽक्षतनय । अक्षत·–अविनष्ट·, नयः–नीतिर्यस्य सोऽक्षतनय. । निष्कलङ्काया –स्वर्णलङ्कापुर्याः अधिपतिरपि, निष्कलङ्काना–कलङ्क–रहितानाम् अधिपति यः समुद्रः–सागरः । कस्य राज्ञोऽपि चन्द्रमसोऽपि न–नैवं मूलाधार·–प्रथमतोत्पत्तिस्थानं चन्द्रामृतादीना तत्रोत्पत्तेः, सोऽपि समुद्रः, सरा –लक्ष्मीः, [ तस्या ] गरस्य–कालकूटविषस्य मणिगणस्य च मौक्तिकादिरत्नसमूहस्य च वितीर्णहृदयो दत्तावास । तथा मथित· यथा विषे-पानीये ये मकरास्तेषा भाजनमेवाधारमात्र एव श्रूयते । अथ च यः समुद्रः समर्यादः पुरुषविशेषः यो राज्ञोऽपि–नृपतेरपि कस्य न मूलाधार सोऽपि सरागस्य रमणीगणस्य स्त्रीसमूहस्य वितीर्णहृदय.–स न दत्तात्मगुह्यः सन्, तथा मथितो यथा विषमस्य करस्य राजदण्डादेर्भाजनम्, शेषं स्पष्टम् । ]

अक्षतनयः–रावणिः रावणस्य पुत्रो हि मेघनादः अक्ष·, स तनयो यस्य स अक्षतनय. रावण. । अक्षत नयो यस्य स अक्षतनय· । निष्कलङ्का°–सुवर्णलङ्का, कलङ्करहिता । राज्ञोऽपि–

1 °स्वस्थानावद्धस° डे । 2 °पूर्वं या डे ।

करणस्तावदेवाक्षतनयोऽप्यक्षतनयः, निष्कलङ्काधिपतिरपि निष्कलङ्काधिपतिः, न कस्य राज्ञोऽपि य. समुद्रो मूलाधार·, सोऽपि[1] सरागरमणीगणवितीर्णहृदयस्तथा[2] मथितो यथा विषमकरभाजनमेव[3] श्रूयते । ततः पुरुषेणाधमतमत्वं निकृष्टत्वं मध्यमत्वमपि विहाय सर्वथोत्तमत्वमेव पुरस्करणीयम् । अधमतमत्वं सर्वथा हेयमेव ।

तदनेन मुनिदेशनाश्रवणेन भानूदयेनेव तमांसि, वडवानलेनेव पयांसि, निदाघेनेव तुषारः, समस्तोऽपि निरस्तस्तस्य मदनविकारः । निन्दता चात्मचरितं चिन्तितमेवं तेन—

धन्यास्त एव जगति स्मृतिगोचरेऽपि
येषामनङ्गहतको न कदाचिदेति[2] ।
यस्मादनेन हतबुद्धिविलोचनाना
नाकृत्यमस्ति किमपीह शरीरभाजाम् ॥२९९॥

मन्यते न तृणायापि ना नाकरमणीरपि ।
ध्वस्तकामो वितृष्णश्च नानाऽऽकरमणीरपि ॥३००॥

चन्द्रस्यापि । मूलाधारः—मूलरूप आधारः—चन्द्रस्य जनकः समुद्रः अतः तस्य मूलाधारो वर्णितः । विषमकर°—विषस्य—कालकूटविषस्य, मकराणा च—मकरप्रमुखजलचराणा भाजनमेव श्रूयते ।

१. 'निष्कलङ्का' इत्यस्य पदविभाग एवम्—
निष्क + लङ्का—निष्क नाम सुवर्णम् ।
निर् + कलङ्का—कलङ्करहिता ।

२. सरागरमणीगण° इत्यस्य एव पदविभागः—
सरा + गर + मणीगण° ।
सरागरमणीगण° । अस्यार्थस्तु टिप्पणे स्पष्टित एव ।
'विषमकर' इति पदस्य एव विभागः—

३. विष—मकर इति विष कालकूटविषम् । मकराः—जलचराः ।
विषमकर इति विषमः करः—राजदेयभागः ।

४. [ ध्वस्तकामः—निष्काम, ना—पुरुष, नाकरमणीरपि—स्वर्गाङ्गना अपि कर्मतापन्ना न तृणायापि मन्यते । वितृष्णश्च—निर्लोभश्च, ना—पुरुष, नानाप्रकाराणाम् आकराणा मणीरपि—रत्नान्यपि, न तृणायापि मन्यते । अग्रेतन 'स्वरूपेण' इत्यन्त विदितार्थम् । ]

ध्वस्तकामो ना—पुरुषः, नाकरमणीः अपि स्वर्गीयदेवी. अपि तृणायापि न मन्यते—तृणतुल्या अपि न मन्यते एवमेव वितृष्णो ना, नाना° भिन्नानाम्—पृथक् पृथक् स्थितानाम् आकराणा—खनीना, मणीः—मणिरत्नानि अपि तृणायापि—तृणतुल्यानि अपि न मन्यते । तृणतोऽपि तुच्छानि मन्यते इति भाव ।

1 सोऽपि सुरासुरगणवितीर्ण° खडे । 2 °चिदेव डे ।

अपि च,

येषामेष मनोभवो भवभृतां वल्गत्यहो स्वेच्छया
तेषां चिरगतोऽपि न क्षमतमः कार्ये विवेकः क्वचित् ।
प्रौढामप्यचिरेण दीपकलिका विध्यापयत्यञ्चलो
नेन जीर्णमपीह दीपकलिका दग्धुं क्षमा तत्क्षणात् ॥३०१॥

दुर्वारमारशरगोचरमीयुषा[1] त्व
यत्सोदरीव जननीव मया न दृष्टा ।
तत्सर्वथाऽधमतमस्य मम क्षमस्व
यत्कालकूटविकृतिं न सुधा दधाति ॥३०२॥

इत्थं क्षमयता प्रणम्य प्रत्यपद्यत भावेन, सोदरीभावेन मदनरेखा भणिता च—किमभिमतं तव संपादयामि । तयाऽभिहितं बान्धव ! देव-गुरून् दर्शयता सकलमप्यभिमतं भवता कृतमेव ।

योजितकरारविन्दया चानुयुक्तः—भगवन् ! कथ्यतां ममास्य पुत्रस्य पूर्वभवचरित्रम् । कथितं च भगवता यथा—

जम्बूद्वीपे पूर्वविदेहे पुष्कलावतीविजये नगरं मणितोरणं नाम । तस्मिन्नमृतयशा नाम चक्रवर्ती । तस्य च पुष्पवतीप्रियाकुक्षिकुशेशयहंसौ भुवनावतंसौ पुष्पशिख-रत्नशिखाभिधानौ द्वौ निरवधिगुणप्रधानौ बभूवतुः प्रशस्तनयौ[2] तनयौ, तौ च चतुरशीतिपूर्वलक्षाणि दलितविपक्षाणि विधाय विहाय च प्राज्यमपि राज्यं भवभयचकितचेतसौ चारणश्रमणान्तिके श्रमणतां प्रतिपद्य षोडशपूर्वलक्षाणि दीक्षापक्ष्मलाक्षीमाराध्य कृतपर्यन्ताराधनावच्युतकल्पे कल्पाधिपसामानिकावुत्तमस्थितिकौ देवावभूताम् ।

तत्र च द्विधाऽपि सुरसमृद्धिकलितं[3] विषयसुखमनुभूय सञ्जातच्यवनौ धातकीखण्डभरतक्षेत्रे हरिषेणार्द्धचक्रिणः समुद्रदत्तादेवीकुक्षिकमलमरालौ सागरदेव-सागरदत्तनामानावङ्गजौ जातौ । क्रमेण राज्यलक्ष्मीं समुपास्याऽपास्य च जातचरणपरिणामौ त्रिभुवनगुरोर्दृढसुव्रत-

१. ईयुषा—गतेन ।
२. प्रशस्तो नयो ययो तौ प्रशस्तनयौ—सुन्दरनीतियुक्तौ ।
३. [ नवर विषयसुखं सुरस—सुस्वादम् ऋद्धिकलि—सुराणां देवानाम् ऋद्ध्या कलितम् । ] सुरसमृद्धिकलि—देवसमृद्धियुक्तम् । सुरस—सुरसतायुक्तम ऋद्धिकलितं च इति द्विधाऽपि ।
सुरसमृद्धि° इत्यस्य पदविभाग एवम्—
(१) सुर + समृद्धि°
सुरसम् + ऋद्धि°

स्यान्तिके दीक्षां प्रपन्नौ। तृतीयेऽहि विद्युता निपत्य व्यापादितौ, समुत्पन्नौ महाशुक्रे महर्द्धिकौ सुरौ।

समासन्नच्यवनाभ्यां च ताभ्यां भगवतोऽरिष्टनेमेः केवलिमहोत्सवकरणायागताभ्यां स एव भगवानपृच्छ्यत-'भगवन् आवयोरुत्पादः क्व भविष्यति' इति। भगवतोक्तम्-'इहैव भरतक्षेत्रे मिथिलाधिपतेर्जयसेनस्यैकस्तनयः द्वितीयस्तु सुदर्शनपुरे युगबाहुयुवराजसूनुरिति-परमार्थतस्तु पितापुत्रौ भविष्यथः।'

इति भगवतो वचनमाकर्ण्य गतौ स्वस्थानम्, स्थितिक्षयेण च तयोरेको विदेहजनपदे मिथिलायां नगर्यां जयसेनभूपतेर्वनमालादेव्यास्तनयो बभूव, प्रवर्तमाने च महामहोत्सवे कृतं तस्य पद्मरथ इति नाम। कालक्रमेण च निजवृद्धभावमिव[1] स्वरूपेण सुरतापकारकं प्रबलमदनाशनैकसमयम् अक्षमरणारम्भयोग्यं[2] नवलीलासमुचितं पद्मरथस्य यौवनमालोक्य दत्त्वा राज्यं प्रव्रज्यामग्रहीत्।

पद्मरथस्तु सह पुष्पमालया मधुकर इव महामोदं[3] राज्यसुखमुपभुञ्जानो यावदस्ति

१ [वृद्धभाव-स्थाविरम्। सुरतस्य-सम्भोगस्य अपकारकम्। प्रबलो यो मदः-अहङ्कारः, तस्य नाशनाय-निर्णाशनाय एकः-अद्वितीयः समयः प्रस्तावः यस्य स तथा तम्। अक्षाणाम्-इन्द्रियाणां यो मरणारम्भः तस्य योग्यम्। बलिना-बलवता या इला-पृथिव्यः तासां न-नैव समुचितम्-समर्थवैरिणा न पृथिव्युद्दालनसमर्थम्। पद्मरथस्य यौवनं पुनः सुराणामपि आस्तां शेषशत्रूणां तापकारकं-सतापजनकं, प्रबलस्य मदनस्य-कामस्य, अशनस्य-भोजनस्य, एकोऽद्वितीयः समयो यस्य तत् तथा, तद् अक्षमः-क्षान्तिरहितो यो रणारम्भस्तस्य योग्यम्। नवायाः-नूतनायाः लीलायाः समुचितम्।]

निजवृद्धभाव-वार्धक्यम्। सुरतापकारकम् यौवनं, प्रबलमदनाशनैकसमयम्, अक्षमरणारम्भयोग्यम्-एतानि त्रीणि निजवृद्धभावस्य यौवनस्य च विशेषणानि। निजवृद्धभावपक्षे सुरतापकारक-सुरतायाः-देवत्वस्य अपकारकम्-यदि वार्धक्यं इत्थमेव विना धर्माराधनं व्यतीतं स्यात् तदा न देवत्वप्राप्तिः इति देवत्वस्य अपकारकम्, अथवा सुरतस्य सुरतिक्रीडाया अपकारकम्। यौवनपक्षे सुराणां तापकारक-देवानामपि भयजनकम्। नि० पक्षे प्रबलमदस्य नाशनाय एकसमयरूपम्-एकसङ्केतरूपम्। यौ० पक्षे प्रबलमदनस्य अशनाय एकसमयरूपम् अर्थात् प्रबलमदनाक्रान्तम्। नि० पक्षे अक्षमरणारम्भयोग्यम्-न क्षमरणारम्भयोग्यम्-समर्थयुद्धस्य आरम्भाय अयोग्यम्, अथवा अक्षाणि-इन्द्रियाणि तेषां मरणारम्भः तस्य योग्यम्-वार्धक्ये हि इन्द्रियाणि म्रियन्ते इति। अक्षमस्य-क्षमारहितस्य अर्थात् क्रोधावेशेन प्रबलतमस्य रणस्य आरम्भे योग्यम्-यौवनं हि न कमपि विपक्षभूतं क्षणमपि सहते इति।

२. [अत्रे पुष्पमालया राज्ञा, अन्यत्र पुष्पदाम्ना। एकत्र महामोदम्-परमहर्षम्, अन्यत्र बहुपरिमलम्। अग्रे 'तावद्' इत्यन्तं सुगमम्।]

1 'वृद्धिभाव' खल। 2 अक्षमसक्रोधरणा° डे। 3 'मोदराज्य' डे।

तावद् द्वितीयोऽपि देवस्तव तनयोऽजायत । तदानीं तुरङ्गमक्रीडाया[1] प्रस्तुताया करणगणेनेव[1] दुःशिक्षितेन तुरङ्गमेण[2] पातितः पद्मरथो दुर्गताविव भीष्माया महाटव्याम्, समासादितश्च तत्रापि जिनधर्म इव स तव तनय, सञ्जाते च पूर्वभवाभ्यस्तस्नेहेन परमपरितोषे[3], समायातश्च तदनु मार्गे लग्न एव[4] पुण्योदय इव चतुरङ्गोऽपि निजबलसमुदयः । तेन च तव पुत्रसहित एव जयन्तानुगतो[5] देवराज इव सुरवारणाकारे राजकुञ्जरे समारोप्य नीतः स्वस्थाने । तेनापि नन्दनप्रणयेनेव समर्पितः पुष्पमालाया देव्या, कारितश्च[6] अकाले इव महामहोत्सवः ।

समाकर्ण्य तदिदं मदनरेखा पुनरपि विज्ञापयामास—'भगवस्तस्य चन्द्रयशसो मयि पलायिताया वराकस्य किं तेन राज्ञा[7] व्यवसितम्?'

निजगदे भगवता—'भद्रे ! समाकर्णय—यावद् युवराजं स मणिरथो निहत्य प्रासादं प्रविवेश तावदेव दुश्चिन्तितप्रचण्डतुण्डेन, दुर्भाषितकुटिलगतिना[8], दुश्चेष्टितप्रलम्बलाङ्गूललतिकेन, निजेनैव पापोदयेनै(ने)व, तरङ्गेणेव दिनेशाङ्गजाया[2], दण्डेनेव यमराजस्य, रशनागुणेनेव[9][3] कालरात्रेः, कालकूटेनेव जङ्गमतां गतेन, शार्वरेणेव[4] तमसा, तदाकारमासेदुषा दुर्जनेनेव भुवनभयङ्करेण, दष्टो महाकायेन कृष्णभुजङ्गेन । कथमस्माकमस्य पापीयसः समीपेऽवस्थातुमुचितमितीव[10] मुक्तः प्राणैः, दुष्कर्मणा च नीतः पङ्कप्रभाभिधायां चतुर्थ्यां नरकपृथिव्याम्[11] । अत एव—

> आस्तां विकारकलुषं परवल्लभाया-
> मन्यापदेशवशतोऽपि वचः सहास्यम् ।
> यद्वीक्षणं क्षणमपि क्रियते स्मरान्धै-
> स्तत् कस्य कस्य न जगत्यसुखस्य हेतुः ॥२०३॥

ततो विधाय तयोर्द्वयोरपि युगबाहु-मणिरथयोः शरीरदाहादिक्रियां[12] समस्तैरपि राजप्रधानः सचिवप्रमुखैः प्रतिष्ठितश्चन्द्रयशा राज्ये ।'

१. इन्द्रियगणेनेव ।

२. दिनेशाङ्गजाया:—यमुनानद्याः—यमुना हि सूर्यपुत्री कथ्यते ।

३. रशना—काञ्ची—कटिसूत्रम्, तस्याः रज्जुरूपेण गुणेन ।

४. शर्वरी—रात्रिः, तत्र भवं शार्वरं—तमः तेन शार्वरेण इव तमसा ।

1 °तुरङ्गक्री° ख । 2 तुरङ्गेण डे । 3 °तोषसमा° डे । 4 मार्गलग्नः खल । 5 °नुमतो डे । 6 °श्च तत्काल एव डे । 7 राज्ञाऽध्यव° ख । 8 °षितेन कु° डे । 9 रसना° ख । 10 °तुमितीव डे । 11 पृथ्व्याम् डे । 12 °दाहादि ख ।

'भूयोऽपि भगवस्तस्यापि युवराजस्य गतिं शृणुपते ममान्तःकरणम्' इति मदनरेखया-ऽनुयुक्तो यावद् भगवान् कथयति तावन्[१]महापुरुषचरित्रमिव विचित्ररूप-क-विरचनालङ्कृतम्, सुभटललितमिव सर्व-तो-रणवैचित्र्यं दधानम्, मुक्तावचूलैर्मुनिमिव प्रशमिततार-कोप-शोभं तेजोमयतया भानुमिव, दर्शनीयतया चन्द्रमयमिव[1], सुतरामभ्रङ्कषशिखरतया स्वस्थानदर्शन-विच्छेदभीतमिव, स्फटिकघटिततलप्रतिफलितसकलवस्तुतया विश्वरूपमिव, चन्द्रकान्तघटित[2]-सोपानतरङ्गमालया भागीरथीमयमिव विविधशालभञ्जिकाभिरामस्तम्भशतरामणीयकाद्भुततयेव विरचितपताकापत्रावलम्बनम् अनेककिङ्किणीजालरवात्मस्तवमुखरं च तत्र विमानमेकमवतरत् सर्वैर्ददृशे ।

निर्जगाम च ततः कुण्डलयुगलच्छलेन दिनकर-हिमकराभ्यां पीयमानकपोलपालीप्रपा-प्रभापीयूषः, मुक्ताकलापच्छलेन श्रेणीभूततारकनिकरेण सेव्यमानवक्षःस्थलनभस्तलः[3], कङ्कण[२]-मणिच्छलादुदयमानसमस्तग्रहनक्षत्रैः परिचर्यमाणपाणि-चरणनखतुषारकिरणः, सकलज्योति-रलङ्कार एको देवकुमारः ।

१. [ महापुरुषचरितं विचित्रो रूपकोऽलङ्कारस्तस्य विरचनयाऽलङ्कृतम्, अनेकरूपकविरचनया-ऽलङ्कृतं वा । विमानं तु विचित्राणां-रूपकाणां-शालभञ्ज्यादीनां विरचनयाऽलङ्कृतम् । सुभटललितं, सर्वतः-सर्वप्रकारैः रणवैचित्र्यं-संग्रामविच्छित्तिं दधानम् । विमानं तु सर्वेषां तोरणानां वैचित्र्यं दधानम् । प्रशमिततारकस्य-प्रौढस्य कोपस्य शोभा येन स तथा । तं विमानं तु मुक्ता-वस्त्राञ्चलैः-मौक्तिकहारैः कृत्वा प्रशमिता तारकाणाम्-उडूनाम् उपशोभा येन स तथा । अग्रेतनं सुगमम् । ]

विमानवर्णने विविधोपमाभिः श्लेषात्मकं तद्वर्णनम्-विमानपक्षे विचित्ररूपकैर्या विरचना तयाऽलङ्कृतम् । रूपकाणि-बिम्बानि । महापुरुषचरित्रपक्षे विचित्ररूपा विविधा वा ये कवयः तेषां रचनाभिः अलङ्कृतम् । वि० पक्षे सर्वप्रकाराणां तोरणानां वैचित्र्यं-विचित्रताम् । सुभटललितपक्षे सर्वतः-समन्ततः रणवैचित्रीम्-युद्धवैचित्र्यम् । वि० पक्षे अवचूलानि-अधः प्रलम्बानि मुक्तामयानि आभूषणानि येन, वि० पक्षे तारकाणां तारानक्षत्राणाम् उपशोभा, प्रशमिता-तेजोहीना कृता । मुनिपक्षे प्रशमिता शान्तिं प्रापिता, तारस्य अत्युच्चैर्विनियुक्तस्य कोपस्य शोभा येन तं तादृशं मुनिम् । भानुपक्षे तेजोमय-तेजस्विविशेषचाकचिक्येन भ्राजमानम् । विमानवर्णने अभ्रङ्कषम् अत्युच्चैःस्थितया, शिखरं° अत्युच्चैः-स्थितशिखरतया गगनस्पर्शकम् । भागीरथी°-गङ्गानदी । °पत्रावलम्बनम्-पत्राणाम् अवलम्बनम्-पत्रं हि अत्र ध्वजानां पत्ररूपम्, अथवा अन्येषां विजिगि-षूणां-प्रतिवादिनाम् । पत्रस्य-विजयपत्रस्य अवलम्बनरूपम् । शालभञ्जिका-स्थूणा या भाषायां 'पूतली' शब्देन प्रतीता । शालवृक्षं भनक्ति या सा शालभञ्जिका तदाकारा या प्रतिकृतिः साऽपि शालभञ्जिका । जालरवात्मस्तव°-समूहशब्द एव आत्मस्तवः-आत्मप्रशंसनं तेन मुखरम् । अव-तरम्-अवतरति इति अवतरं विमानविशेषणम् ।

२. कङ्कणमणि°-देवा हि हस्तयोः यथा कङ्कणानि परिदधति तथा चरणयोरपि परिदधति इत्येतद् अनेन विशेषणेन प्रतीयते ।

1 चन्द्रमिव ख । 2 °कान्तमणिघटित° ङ । 3 °नभःस्थल. ङ ।

समागत्य च त्रिः प्रदक्षिणीकृत्य भूतलन्यस्तमस्तको मदनरेखायाश्चरणतामरस प्रणम्य मुनिचरणयुगलं पश्चात् प्रणनाम । निपसाद च तदग्रतो भूतले ।

ततः स्त्रीप्रथमप्रणामबहुमानजनित मुनेरवज्ञास्थानमालोक्य स खेचरश्चिन्तयामास—

त्रिभुवनललामभूता नूनमिय वामलोचना नान्या ।
कथमन्यथैष देवोऽपि मानवीं नमति साधुतः पूर्वम् ? ॥३०४॥

जगाद च—

नीतिरेव परम विभूपण नीतिरेव विनिहन्ति दूषणम् ।
नीतिरेव परमार्तिवारण नीतिरेव सकलार्थकारणम् ॥३०५॥

परम्—

सामर्थ्येन विना नीतिः सिद्धान्तेन विना क्रिया ।
वल्लभेन विना कान्ताऽवज्ञास्थान पदे पदे ॥३०६॥
देवानामेव सामर्थ्यं यदि वा भूभुजामिदम् ।
प्रकाशो भास्करस्यैव यदि वा शीतरोचिप ॥३०७॥

यदि विबुधवरिष्ठनीतिमेतां
त्वमपि तृणाय न मन्यसे वराकीम् ।
शरणमियमुपैत्यहो ! कमन्य
प्रतिपदमेव कुनीतिदूयमाना ॥३०८॥

भूपतिरपि यतिरपि सक्षमोऽपि रसिकोऽप्यसौ सदाचरणे ।
यदवज्ञातो नमता प्रथम भवता कुरङ्गाक्षीम् ॥३०९॥

धर्मनीतिप्रकाशसुभगभविष्णुना परमरहस्यमलङ्करिष्णुना दुर्मतिजिष्णुना तेनोपन्यासेन जातपरितोप स विबुध उवाच—

१. एता मदनरेखा विबुधवरिष्ठनीतिं-विबुधवरिष्ठनीतिभाजनरूपाम् ।

२. [ भूपतीत्यादौ—भूपतिपक्षे सक्षम —सपृथ्वीक । रणे—सग्रामे च । सदा—नित्य रसिकः । यतिस्तु सक्षम.—क्षान्तिसहित., चरणे—चारित्रे सदा रसिक शेष 'तथाहि' इत्यन्त सुगमम् । ]

क्षमया—वसुधया सहित सक्षम. भूपति । क्षमया—सहनशीलस्वभावेन सहित सक्षमः यतिः । भूपतिः सदा च रणे रसिक । यतिः सदाचरणे सच्चारित्ररूपे रसिकः ।

सदाचरणे इत्यस्य पदविभाग एवम्—

(१) सदा च रणे ।
(२) सदाचरणे ।

1 °साद तद° ख। 2 नीतिरेव सकलार्थकारण नीतिरेव परमार्तिवारणम् डे । 3 यदवज्ञा नम° डे । 4 °ष्णुना च तेनो° खल ।

'साधु खेचरेन्द्र ! साधु, परमीदृशाचरणे समाकर्णय कारणम् । सुदर्शनपुरे मणिरथो राजा । तस्याहं सोदर्यो युवराज. । स चाह मधुसमये राज्ञा केनापि पूर्वभववैरेण प्रमद-वनमुपेत्य पादपतितो निहतः कन्धरायां करालेन करवालेन । तेन च प्रहारेण दोदूयमान-चित्तस्य गलितबलस्यापि ममोल्लासितः कोपाटोपः । तथाहि—

> न-तापकरणक्षमः सगुणपुण्डरीकैरहो !
>
> न कैरवहितो जडप्रकृतिरैक्षि दोषोदये ? ।
>
> कलोपकरणोद्यत. सुनयनेत्र-सौख्यप्रदः
>
> कलङ्कयति मण्डलं सकलमेव राजाऽपि धिक् ॥२१०॥

तदधुना समाप्ताऽस्य वराकस्य कथा । यतो गतोऽसौ सम्पूर्णमण्डलोऽपि ममास्ख-

१. [न तापेत्यादिवृत्तम्–दोषोदये–अन्यायोत्पादे, अवहित'–सावधानः पुरुष । कैः ? सगुणपुण्डरीकैः–गुणवत्प्रधानैः पुरुषैः । जडप्रकृतिः–मूर्खस्वभावः, न–नैव, ऐक्षि–दृष्टः । अपि तु सोऽपि तैरज्ञतया ज्ञातः, एवंभूतोऽसौ नतानां–प्रणतानाम्, अपकरणक्षमः–अपकारसमर्थः । कस्य–मुखस्य मस्तकस्य वा–लोपकरणे–विनाशे उद्यत । सुनयानां–शोभननीतीनाम्, नेतॄणा–स्वामिनाम् असौख्यप्रदः । आस्ताम् अन्यस्य सामान्यः एवंविधो राजाऽपि–भूपोऽपि धिक्–निन्द्य । अत एव मण्डलं देश कलङ्कयति–जनत्याज्यत्वेन दूषयतीत्यर्थः । अन्यत्र न–नैव तापकरणक्षम–संतापजनकसमर्थः । यतो जडप्रकृति'–शीतल' स्वभाव', कैरवहितः–कुमुदानुकूल । कला एव स्वखण्डानि एव उपकरण तदर्थमुद्यतः । अहो आश्चर्यं, एवंविधोऽपि सकलमपि मण्डल–बिम्ब कलयति–लाञ्छनच्छुरितं करोति । तथा सगुणैः–सतन्तुभिः पुण्डरीकैः–सिताम्भोजैर्नैक्षि–नावलोकितः रात्रौ तेषां सुप्तत्वात् ।]

२. [सपूर्णमण्डल–परिपूर्णबिम्ब' । अथ च समस्तदेशः । मम तमस'–राहोः । अथ च मदीयस्य तमस–क्रोधस्य । चन्द्रो हि शुक्लपक्षं विनैव गिल्यते, पुनरुद्गिल्यते च । अयं तु मणिरथः सपक्ष, सपरिजनोऽपि मया गिलिष्यते, न पुनरुद्गिलिष्यते । अग्रेतन उच्छ्वासपर्यवसान स्पष्टार्थम् ।]

राजाऽपि सकलमेव मण्डल कलङ्कयति इति त धिक् । अत्र 'राजा'पदेन चन्द्रः तथा भूपः विवक्षितः । भूपपक्षे नतापकरणक्षमः–नताना जनानाम् अपकरणे–अपकारकरणे क्षम' । चन्द्रपक्षे न–नहि तापकरणक्षमः चन्द्रो हि शीतलः अतः तापकरणे न क्षम. । नतापकरणे इत्यस्य एवं पदविभाग —(१) नत + अपकरणे । (२) न+तापकरणे । भू० पक्षे न कैः अवहितः–अपहित.–अहितकारी राजा जडप्रकृति–महामूढप्रकृतिः, ऐक्षि–दृष्ट । च० पक्षे न कैरवहित–कैरवनाम्ना कमलाना चन्द्रो न हितः–न हितकरः । प्रत्युत हितकर एव । भू० पक्षे दोषाणाम् उदये सति । च० पक्षे दोषाया उदये सति । भू० पक्षे कस्य–मुखस्य लोपकरणे उद्यतः । च० पक्षे कलानाम् स्व अंशरूपकला.नाम् उपकरणे उद्यत' । भू० पक्षे सुनयनेत्रसौख्यप्रद –सुनयनेतॄणा–सुनयनायकाना–नीतिमता–सत्यनिष्ठाना वा, नेतॄणाम् असौख्यप्रद.–सुनयनेतृ + असौख्यप्रद'–सुनयनेत्रसौख्यप्रदः ।

1 तथापि डे. ।

लिप्तप्रसरस्य तमसो ग्रासावलिकायाम्, अथवा सपक्षोऽपि गिलिष्यतेऽसावनेन न पुनरुद्गि-लिष्यते । तथाहि—

विश्वस्तस्य प्रहारं हतमतिरसिना कन्धरायामदान्मे
यस्त मारैरनेकैरयमहमधुना मारयिष्याम्युदित्वा ।
यः कश्चित् पक्षपात प्रबलरुपि मयि स्त्री नरो वाऽस्य कुर्याद्
वाल वृद्धं युवान धनपतिमधनं वा तमप्येवमेव ॥३११॥

इति हृदयस्थितया विपक्षपक्षपातिन्येव पापिष्ठया चिन्तया समर्पितोऽह रौद्रध्यानस्य, तेनापि यावदन्तेमारत्धोऽह नरककुहरकारागारे तावन्मम कुलदेवतयेवानया प्रशममयैरिव स्वदेशसारैरिव निर्दोषहरैरिव वरणोत्पन्नैरिव परमारितकराऽधिवारिरेरिव जिनराज-शासनरहस्यभृतैरुपदेशवीरैः कर्णविवरप्रवेशितैरपसार्य त ज्ञानश्रद्धानचरणानुगम्यमानो मैत्र्यादिभावनात्मकः पुरस्कृतपञ्चपरमेष्ठिबलः चतुःशरणवज्राङ्गिकासन्नद्धः समतैककरिकन्ध-राधिरूढो धर्मध्यानमहावीरः पुरश्चक्रे । नीतश्चामुना समाधिसुखासनासीनः क्षणेनैव ब्रह्मलोके अवतारितश्च दिव्यशयनसम्पुटे, ततोऽन्तर्मुहूर्तेन सर्वाङ्गीणाभरणाभिरामो यथा-कामरूपः सकललक्षणसम्पूर्णः सप्तधातूज्झिताङ्गो नित्ययौवनः सर्वाङ्गसुन्दरमूर्तिरिन्द्रसामा-निकः समजनिषि ।

जय जय, नन्द्या इति स्फुटदाशिष
वधिरितदिश भूयो गुञ्जचतुष्किक तूर्यकम् ।
श्रुतियुगसुधाऽऽसाराकारस्फुरत्कलगीतिक
कलकलमह श्रुत्वा जातो विकस्वरविस्मयः ॥३१२॥

अहो ! सश्रीकमिदम्, अहो ! रमणीयमिदम्, अहो ! सेव्यमिदम्, अहो ! महानन्दसदन-मिदम्, अहो ! किमिदमासदम् अहम् ? इति चिन्तयन्नेव विज्ञप्त सुधामधुरया गिरा विनयनम्र-मौलिना, प्रतीहारेण—'नाथ ! ब्रह्मलोकनामाऽयं पञ्चमः स्वर्गलोकः त्वमत्रास्माकमनाथानां

च० पक्षे सुनयनेत्राणा सौख्यप्रदः, अथवा अत्र सुनयने सौख्यप्रद—अत्र अस्मिन् लोके सुनयने सौख्यप्रदः । सगुणपुण्डरीकैः के न ऐक्षि—सगुणेषु गुणयुक्तेषु मनुष्येषु शिखरायमाणैः पुरुषैः गुणिप्रवरपुरुषैः के एतादृशः न ऐक्षि ? अपि तु सर्वे ऐक्षि—दृष्ट. ।

भूपः संपूर्णमण्डल. संपूर्णवसुधामण्डलः । चन्द्र. संपूर्णमण्डलः—सपूर्णतया वृत्ताकारः । तमसः राहोः ग्रासावलिकाया ग्रासानाम् आवलिका तस्याम्, अर्थात् मया स ग्रस्त इति भाव ।

१. 'नन्द्या. नन्द्याः' इति पदद्वयम् आशीर्वादसूचकम्, समृद्ध्यर्थकस्य 'नन्द्'धातोः आशिषि द्वितीयपुरुषैकवचनम् ।

1 'प्रसरग्यास्ति' खल । 2 °तादिवा° डे । 3 'सुखासीन खल । 4 °स्पसक° ख । 5 °वनसर्वा° ख । 6 स्फुटाशिष ख । 7 °धुरगिरा ख । 8 प्रतिहारेण ख । 9 °नामा पञ्चमोऽय स्वर्ग° डे ।

नाथ., शक्रसामानिकस्त्रिदशवर. पुण्यैरद्यैव जातोऽसि । अवलोकयत —वैवैते[1] रमणीरमणीय-तराऽङ्गणा रत्नमया. प्रासादा:[2]; एता: कनकाम्बुजरज:पुञ्जपिञ्जरिताऽमृतपरिपूर्णा. क्रीडादीर्घिका:,एते रत्नशिखरा: सुवर्णवपुप: क्रीडागिरय:,एता. समुच्छलदतुच्छस्वच्छतरङ्गसङ्गता: केलितरङ्गिण्य., एतानि नित्य कुसुमफलकलितानि केलिकाननानि, इद च विचित्रमणि-गणरमणीयमास्थानम् । एताश्चामर-मुकुर-तालवृन्तभूषितपाणयस्तव दर्शनोत्सुका वारनार्य । एष प्रेक्षणकरसामृतपराभूतसमुद्रगर्वसर्गो गन्धर्ववर्ग:' इत्यादि आकर्णयन्नेव दत्तोपयोगोऽवधि-ज्ञानेन सकलमपि पूर्वभवस्वरूपमज्ञासिपम्, प्रियोपदिष्ट जिनधर्मफलमिदमिति ध्यात्वा चाभिषेकोद्यत त्रिदशलोकमपहाय गुरुबुद्धयैवागतोऽह एता वन्दितुम् । वन्दिता च प्रथममियमेवेति ।

धनमनिधनमेव तेन दत्तं निरवधिराज्यमपीह तेन दत्तं
सुरपतिपदमङ्ग । तेन दत्तं य इह ददौ किल बोधिरत्नमेकम् ।
यो येन शुद्धधर्मे निवेशित: संयतेन गृहिणा वा
तस्य स एव गुरु: स्यात् जिनेन्द्रधर्मप्रदानेन ॥३१३॥

ततोऽभ्यधीयत विद्याधरेण—'साधु साधु श्लाघ्यैव तवोचितचारितेय, वर्णनीयैव तवाशुकारितेय, अनुमोदनीयैव तव कृतज्ञतेयम् । यत.—

धन्यास्त एव भुवनैकविभूषण ते
ते वन्दनीयचरणा. शरण भुवस्ते ।
येषा वपुर्धनपवित्रकलत्रमित्र—
पुत्रादपि प्रियतमेह कृतज्ञतैव ॥३१४॥

तदनेन तवाऽऽकूतश्रवणेन अमुना चस्थानविनयविलोकनेन कृतार्थे मम श्रवणेक्षणे । अहो ! जिनधर्मस्य प्रभावातिशय., तदेतत् सत्यमेव—

तावदेव भविना भवार्णवे दु खलक्षलहरीविघूर्णना ।
यावदेव न जिनेन्द्रशासन यानपात्रमिव लभ्यते ध्रवम् ॥३१५॥

१ वा + एव + एते—वैवैते ।

२. अत्र 'प्रासादा: सन्ति' इति वो यम् । 'अवलोकयत' इत्यस्य 'प्रासादा' इत्यनेन कर्मरूपो न संबन्ध: । अवलोकयत—यूय पश्यत एते प्रासादा: सन्ति इति भाव ।

1 °वरपुण्यैर° ख । 2 °पिञ्जरामृत° ख । 3 °भूपणपा° ख । 4 प्रेक्षणिक° खल । 5 इत्याक° ख । 6 जिनेन्द्रध° ख 7 °धरेन्द्रेण ल । 8 तदाशु° डे ।

त्रिदशराजेन जगदे—

भगवन्निह जिनधर्मे किं सारं कथय मद्विवेकदृशाम् ।
मुनिरपि जगाद साधर्मिकस्य वात्सल्यमेवैकम् ॥३१६॥

यतः—

चक्रे तेन जिनार्चनं स विदधे सम्यग्गुरूपासनं
तत्त्वं तेन जिनागमस्य कलितं सङ्घोन्नतिं स व्यधात् ।
सत्यं कारितमेव तेन सुधिया निर्वाणशर्माद्भुतं
यः साधर्मिकगौरवं वितनुते ह्यग्रो गुरूणामिव ॥३१७॥

अपि च—

सम्पूर्णोऽपि कलाढ्योऽपि नयनानन्दप्रदोऽप्यङ्गिना
सर्वस्याप्युपरिस्थितोऽपि यदि वा प्राणप्रियोऽपीशितुः ।
शोभामेति समानधार्मिकजनैरेवान्तिकस्थैः सुधी–
र्लक्ष्मीं कां न बिभर्ति शीतकिरणस्तारागणालङ्कृतः ॥३१८॥

इति श्रवणानन्तरमेव योजितकरारविन्देन तेन वृन्दारकवरेण[1] प्राप्तसतीरेखा मदनरेखाऽभ्यर्थीयत—'समानधार्मिके ! मदनरेखे ! प्रदीयतां धार्मिकोचितो मह्यं समादेशः[2] । किं ते प्रियं सुखं करोमि । पश्य—

साधर्मिकसमं पात्रं सप्तक्षेत्र्यां परं न हि ।
येनेयं वर्द्धतेऽम्भोधेर्वेलेव[3] श्वेतरोचिषा ॥३१९॥'

भणितमनया—'कृतज्ञशेखर ! न भवतामधीनं मम प्रियं सुखम् । यतः—

मम जन्म-जरा-मरणादिभयोज्झितमेव सुखं प्रियमस्ति शिवे ।
तदनास्रवधर्मधनप्रभवं त्वदधीनमिदं भवतीह कथम् ? ॥३२०॥

१. सप्तक्षेत्र्यां साधर्मिकसमम् अन्यत् पात्रं विशिष्टं वरेण्यं च न विद्यते अर्थात् सप्तसु क्षेत्रेषु साधर्मिकजन एव उत्तमं पात्रम्, यतः येन साधर्मिकजनेन इयं सप्तक्षेत्री तथा वर्धमाना वर्तते यथा श्वेतरोचिषा चन्द्रेण अम्भोधेर्वेला वर्धमाना वर्तते, साधर्मिकजनोद्धारं विना सप्तक्षेत्री क्षीणा भवति, अतः तस्याः क्षीणतानिवारणाय साधर्मिकजनानामेव समुद्धरणं सर्वत्र प्रथमं विधेयम्, तदनन्तरम् अन्येषां क्षेत्राणां समुद्धारप्रवृत्तिः सफला–विना साधर्मिकजनोन्नतिम् अन्येषां जिनचैत्यप्रभृतिक्षेत्राणां समुन्नतिः विशिष्टरूपेण सफलतमा कथमपि न स्यात्, साधर्मिकक्षेत्राभ्युदयस्य प्राधान्यं विना अन्यक्षेत्रोद्धृतिः प्रायो विफला जायते इति साधर्मिकजन एव परमोत्तमं पात्रम् इति ग्रन्थकारश्रीजिनभद्रसूरिणा समर्थितम् एतत् पात्रम् ।

1 °कर्वरेण ड । 2 °चितो ममा° ख । 3 वर्धितोम्भोधिर्वे° ल ।

केवलमधुना मिथिलापुरीं नय माम्, दर्शय नन्दनवदनारविन्दम्, येन तद्विलोकन-सम्पन्नलोचनसुखा पारमार्थिकसुखाचरणाय चरणमाचरामि ।'

तेन च मुनिचरणनमस्करणपूर्वकमेवाद्भुतदिव्यसामर्थ्यवशेन निमेषमात्रेणैव निन्ये मिथिलाम् । तत्प्रभावातिशयावलोकनेन च सा विस्मयते स्म ।

प्रियतमहृदयालवालमध्ये सुकृतमरुरूपदेव यद् द्रुकल्पम् ।
कुसुमितमवलोक्य तद् द्युलक्ष्म्या मुदमगमत् परम पतिव्रता सा ॥३२१॥

इति श्रीजिनभद्रसूरिविरचिताया मदनरेखाख्यायिकाया
श्रीमन्नेमिचरित्रापराभिधाया मुदङ्काया चतुर्थ उच्छ्वास समाप्त. ।

१. अरुरूपद् एव–रोपितवती एव । तात्पर्य त्वेवम्–युगवाहुनामकस्य मरणासन्नस्य स्वकीयप्रियतमस्य हृदयरूपे आलवाले–केदारे सुकृतरू द्रुकल्प–द्रुमसमान वृक्ष रोपितवती पूर्वभवे, तम् एव सुकृतवृक्षम्, द्युलक्ष्म्या–स्वर्गप्राप्तिश्रिया कुसुमित पुष्पसमन्वितम् अवलोक्य सा पतिव्रता मदनरेखा परम हर्ष प्राप्तवती ।

**॥ इति चतुर्थ उच्छ्वासः समाप्तः ॥**

# पञ्चम उच्छ्वासः ।

जिनचन्द्रयोरिय[1] मल्लिनाथ-नमिनाथयोर्जगन्नुतयोः ।
जन्म-व्रतभूमितया परमतमं पावनं तीर्थम् ॥३२२॥
प्रथममतश्चैत्यगृहे तयोः प्रविश्य प्रमोदकलितौ तौ ।
जिनमहिमानं चक्रतुरायातौ[1] तं विधातुमिव ॥३२३॥

कुत्राप्युपाश्रये च निरीक्ष्य सुसाध्वीर्नमस्कृत्य च समुपविष्टौ तदग्रतः, ताभिरपि सविस्तरं धर्मं निवेद्य सर्वसारमुक्तम्—

अधिगम्य मतं जिनेशितुश्चरणं ये प्रतिपेदिरे बुधाः ।
शिवकारणमत्र ते नरा भुवनेऽन्ये पशवो वराककाः ॥३२४॥

इत्यादिदेशनया सञ्जाततीव्रचरणपरिणामा[3] प्रस्तुतप्रयोजनार्थमाख्याता सा त्रिदशेन—

सच्छायघनतरलताप्रधानसुतरूपशान्तसन्तापा ।
इह रमणी रमणीया सुतरामारामभूमिर्वा ॥३२५॥

तया पुनरकुण्ठोत्कण्ठा चरणं प्रति दधानया तदानीमित्थमूचे—

सुरतरुचितसन्तानेच्छाया योगेन नन्दनं लब्ध्वा ।
यद् यस्य दर्शने सुमनसोऽपि मोहस्तदस्त्वमुना ॥३२६॥

---

१. इय मिथिला नगरी ।

२. जन्मभूमितया—जन्मकल्याणकस्थानरूपेण । व्रतभूमितया—दीक्षाकल्याणकस्थानरूपेण ।

३. तयोः जिनचन्द्रयोः—जिनेषु चन्द्रसमानयोः तयोः मल्लिनाथ-नमिनाथयोः चैत्यगृहे इत्यन्वयः ।

४. ताभिः इति उपाश्रयस्थिताभिः । अनेन उल्लेखेन सूचितमेतद् यत् साध्वीजनोऽपि उपदेशप्रवचनाधिकारी जैनशासने संमतः ।

५. रमणीपक्षे सुतरूपेण—सुतप्राप्तिरूपव्यापारेण—सुतजन्मना शान्तः संतापो यस्याः सा मदनरेखा—मदनरेखया यो नवजातः सुतः तत्र अटव्यां स्थापितः तस्य त्रिदशद्वारा वृत्तान्तश्रवणेन तस्याः संतापः उपशान्त इति भावः ।

६. आरामभूमिपक्षे सच्छायैः घनतरलताप्रधानैः सुतरुभिः सुरतरुभिः उपशान्तः संतापो यस्याः सा आरामभूमिः ।

७. चरणं चारित्रम्, तत् प्रति अकुण्ठोत्कण्ठा दधानया तया विद्याधरं प्रति ऊचे इति पदसंबन्धः ।

८. सुरतं मैथुनम्—अब्रह्मचर्यम्, तस्य रुचिस्तेन अभिलाषेण यः संतानः पुत्रः तस्य

---

1 °तौ वि° ख । 2 °श्रये नि° डे । 3 °तीव्रपरिणामा डेख । 4 लब्ध्वा° ख ।

अपि च,

कति न कति न भुक्ता भूरि भोगोपभोगा.
कति न कति न जाता. पुत्र-पौत्रादियोगाः ।
कति न कति न भूताः सार्धमेतैर्वियोगा-
स्तदिह भवनिवासे क. सुतः क. परो वा ? ॥३२७॥

तत· पुत्रापुत्रयोरथवा सचराचरेऽपि जगति समतैव श्रेयसी । आस्ताम् अपर·, परमात्माऽपि तावदभिन्न एव चिन्तनीयस्तदल मोहनिबन्धनेन तनयनिरीक्षणेनेति जैनेश्वरी प्रदत्तशिवशर्मशय्या प्रव्रज्यामेव स्वीकरिष्ये । त्वमपि महाभाग ! यथाभिरुचित विधेहीत्युक्त·, सोऽपि साध्वीमदनरेखा च प्रणम्य गतो निजकल्पम् । तया पुनस्तासामेव भगवतीना समीपे प्रतिपन्ना पारमेश्वरी दीक्षा समधिगतसुव्रताभिधाना च ।

ता दीक्षा प्राप्य साकाङ्क्षा शिक्षा कक्षीचकार सा ।
शिक्षाहीना तु या दीक्षा भिक्षामात्रस्य कारणम् ॥३२८॥

अन्तर्बहि. पुर. पश्चात् क्षान्तिश्चक्रे तयाऽऽत्मन. ।
सत्य एव सतीना स्युः प्रशस्या प्रतिचारिका· ॥३२९॥

नम्रता प्रागपीष्टाऽस्यास्तदानीं तु विशेषत· ।
द्राक्षेष्टा सुहितस्यापि क्षुधार्तस्य किमुच्यते ? ॥३३०॥

ऋजुतामात्मनो भिन्ना न सा चक्रे दिवानिशम् ।
दम्भस्य वैरिणो यस्मात् सैवैका प्रतिपन्थिनी ॥३३१॥

इच्छाया मोहरूपाया लिप्साया योगेन सबन्धेन नन्दन पुत्र लब्धा–प्राप्तवती अब्रह्मचर्यरूपेण व्यामोहेन मूढा· सती नन्दन प्रसूतवती, अत्र 'नन्दनो हि व्यामोहकारणम्' इति स्पष्टयितु पश्चार्धेन स्पष्ट सूचित यत् 'यस्य दर्शने मोहः तदस्तु अमुना' इति ।

अत्र 'नन्दन 'पदेन नन्दननामक सुराणा क्रीडावनमपि सूच्यते । तस्य पक्षे 'सुरतरुचित-सतानेच्छाया योगेन' इत्यादिवाक्यस्यायमर्थः–सुरतरूणा कल्पवृक्षाणा चितः सचितः यः सतानः विस्तारः यत्र तद् नन्दन वनम् । तस्य तादृशस्य नन्दनवनस्य तत्र रमणार्थमिच्छाया योगेन देवा नन्दनवन प्राप्नुवन्ति इति आशय । अत एव पश्चार्धेन निर्दिष्टम्–सुमनसोऽपि–देवस्य अपि नन्दनवने मोहः ।

मदनरेखापक्षे सुमनसोऽपि चारुमनसोऽपि मदनरेखाया इत्येव 'सुमनसः' इति मदनरेखा-विशेषणम् । मदनरेखाया नन्दने मोह, इत्येतत् तु अत्र स्पष्टितमेव ।

1 यथारुचित डे ।

श्रुत जुघोष सन्तोष पुपोष प्रतिवासरम् ।
तृष्णाकृष्णाऽहितो रक्षा क' कर्तुमपर. क्षम. ? ॥३३२॥
तप.श्री. प्राणतोऽपीष्टा द्वादशाङ्गी च सर्वदा ।
कपायास्त्रवरोगाणा सैवका परमौषधी ॥३३३॥
धर्मीकृत्य निजप्राणान् पालयामास सयमम् ।
यत् तस्या संयम प्राणा. प्राणास्तु न तृणान्यपि ॥३३४॥
अङ्गीचक्रे तया सत्य तद विना मौनमेव च ।
पथ्याशित्व पर युक्त लङ्घन चापि धीमताम् ॥३३५॥
समाचचार शौचं सा शुद्धेन विधिना तथा ।
यथाऽमस्त परेषां स्वं मृतकं कृमिसङ्कुलम् ॥३३६॥
नवापि ब्रह्मचर्यस्य गुप्तयश्चक्रिरे तया ।
परब्रह्मफल येन ताभ्य एव प्रजायते ॥३३७॥
देहेन्द्रिय-मनोभ्योऽपि स्पृहयामास नैव या ।
वाह्ये परिग्रहे तस्या. कीदृशी स्यान्ममत्वधीः ? ॥३३८॥
एव दशविधे धर्मे सर्वथा निश्चलाऽप्यसौ ।
विजहार महानन्दश्रिया सार्धं यथाविधि ॥३३९॥
दुर्दान्तेन्द्रियवाजिराजिदमनं क्रोधादिविच्छेदन
सिद्धान्ताध्ययनोपचारकरण दुष्कर्मनिर्मूलनम् ।
सद्गीतार्थपरम्परागतमिह क्षान्तिप्रधान च यत्
तज्ज्ञानादिपरा तदाऽखिलमसौ तीव्र तपस्तप्यते ॥३४०॥

तस्य वालकस्य पुनरमन्दानन्दपूर्वकं नमिरिति नाम राजा पद्मरथो गुणनिष्पन्नं चकार। यत कारणात् यस्मिन्नेव दिने समासादितोऽसौ तस्मिन्नेव दिने सेनापतिभ्योऽपि नमन्ति स्म अनमन्तो विपक्षक्षितिपतय । तत स नमिकुमार प्राणेभ्योऽपि प्रिय प्रतिक्षण विधीय-मानेषु लवणोत्तारणेषु, प्रतिदिन क्रियमाणेषु रक्षाकण्डकेषु, पक्षे पक्षे वीक्ष्यमाणेषु देहोपचयादिषु,

१. अनेन पदेन 'साध्व्याऽपि द्वादशाङ्गया अभ्याससवन्धं स्थापितवत्य' किम् ?

२. नवापि–नव अपि । अत्र 'नव'शब्दः सख्यासूचक- । जैनशासने हि ब्रह्मचर्य-परिपालनाय नव वाटिकाः प्रदर्शिता इति प्रसिद्धमेव । 'वाटिका'शब्देन अत्र वृक्षसरक्षणाय या 'वाड' क्रियते सा ग्राह्या, नान्या ।

३. 'पक्षे पक्षे वीक्ष्यमाणेषु देहोपचयादिषु' इत्यनेन स्पष्ट ज्ञायते यत्–विद्यार्थिना शरीर पक्षे पक्षे कियतीं वृद्धिं प्राप्तम् कियती वा हानि प्राप्तम् इति परीक्षापद्धतिः प्राचीनकालत एव

1 श्रुतज घो° डे। 2 °ङ्गीव स° डे। 3 °राजदमन खल। 4 °व समा डे। 5 प्रतिक्षण क्रि° डे।

मासे मासे प्रस्तूयमानेषु देवोपयाचितेषु[1], स्खलिते स्खलिते[2] सादरमुद्घुष्यमाणेषु परिचारिकाभिराशीर्वचनेषु, वयोनुरूप समयानुरूप कुलानुरूप देशानुरूप प्रवर्त्यमानेषु महामहोत्सवेषु समजायत अष्टवार्षिकः।

समर्पितो राज्ञा कलाचार्यस्य, ततश्च पतिवरा इव सकलभूपालस्पृहणीया हिमरुचिमरीचय[1] इव भुवनजननयनहारिण्यो महाकथाप्रथा इव सहृदयहृदयविश्रामभूमयः सर्वज्ञशासनक्रिया इव सर्वथाऽपि निरवद्या विनापि कालविलम्बेन सकला गुरोरपि चित्तचमत्कारकारिका[4] विमला द्वासप्ततीरपि कलाः कलयाचकार[5]।

सुस्वामिसेवोत्कण्ठाप्रोत्साहितेनेव कलाकलापप्रसिद्धिविस्मितेनेव निजावसरस्पृहयालुरतिपतिप्रार्थितेनेव भविष्यदन्तःपुरीपुण्यपरिपाटीघटितेनेव सकलसंसारिकसुखनिबन्धनेन[6] यौवनेनालङ्कृत इति विज्ञाय तेन राज्ञा कुलीना[4] अप्यमरसुन्दरी, न-भोगरहिता अपि विद्याधर[5]-युवतीः, शेषराजदुर्लभा[6] अपि पातालरमणीस्त्रिभुवनातिशायिरूपयौवनलावण्यसौभाग्यभाग्य-

समायाति। 'उपचयादिषु' इत्यत्र आदिशब्देन देहप्रमाणस्यापि, देहभारस्यापि, देहस्य रुग्णतायाः आरोग्यस्यापि वीक्षणं समाविष्टम्।

१–३. 'द्वासप्ततीः अपि कलाः कलयाचकार' इत्येवमन्तिमेन पदेन य द्वितीयाबहुवचनयुक्तः 'कला'शब्दः प्रयुक्त तथा 'कलयाचकार' इत्येवं यत् कर्तरिप्रयोगरूप क्रियापद प्रयुक्तम्, तत्प्रयोगद्वयापेक्षया अत्र वाक्यसमूहे यानि 'कला' इत्यस्य उपमारूपाणि पदानि वर्तन्ते तैः द्वितीयाबहुवचनयुक्तैरेव भाव्यम्, न प्रथमाबहुवचनयुक्तैः। अत्र कानिचित् 'कला'पदविशेषणानि प्रथमाबहुवचनयुक्तानि अपि दृश्यन्ते, यथा–'हिमरुचिमरीचयः' 'जननयनहारिण्यः' 'सहृदयहृदयविश्रामभूमयः' इति एतत् कथं समुचितं भवेत्?।

४. कुलीना'–पृथ्वीसमाश्रिता'। या ईदृशी कुलीना सा अमरसुन्दरी न भवति इति विरोधः। परिहारस्तु–कुलीना–उत्तमकुलजाता। 'अमरसुन्दरी'शब्दोऽत्र 'अमरसुन्दरीतुल्या' इति आशयज्ञापनाय बोध्यः।

५. या विद्याधरयुवतिः सा तु नभोगेन–नभोगामिना सहिता एव भवति। अत्र तु नभोगरहिता इति विरोधः। परिहारस्तु–न भोगरहिता–भोगरहिता न किन्तु भोगसहिता तथा 'विद्याधरयुवतिः'इति पद विद्यावतीनां कन्यानां सूचकम्, न नभोगविद्याधरार्थबोधकम्। विरोधे 'नभोग°'इति अखण्ड पदम्। परिहारे तु 'न भोग°'इति पदद्वयम्।

६. या पातालरमणी सा शेषराजदुर्लभा–शेषाख्यनागराजदुर्लभा न भवति, इयं तु सत्यपि पातालरमणी शेषराजदुर्लभा इति विरोधः। परिहारस्तु शेषाणाम् अन्येषां राज्ञां दुर्लभा इति शेषराजदुर्लभा इति। 'शेष'शब्द अत्र 'अवशिष्ट'भावबोधको बोध्यः। 'पातालरमणी'-शब्दोऽपि 'पातालरमणीतुल्या' इत्यर्थको ज्ञेयः।

1 देवोपचयादि तेषु ख। 2 स्खलिते सादर° ख। 3 सहृदयवि° ख। 4 °कारिवि° खल। 5 °चक्रे ख। 6 °न्धनबन्धनेन ल। 7 °इकृनेन तेन खल।

विलासरसवतीरिक्ष्वाकुकुलनभस्तलसुधांशुमूर्तीरष्टोत्तरसहस्रसङ्ख्याः कुलबालिकास्ताः परिणाययाञ्चक्रे ।

यासामास्यसुधांशुरश्मिघटनाप्रस्यन्दमानामृत-
प्रालेयांशुदृपद्विलासभवने धारागृहस्य स्पृहा ।
तीव्रांशुप्रबलप्रतापविषमग्रीष्मोष्मबाधाकुले
काले तस्य विलासलालसधियो यत्नं विना सिद्धयति ॥३४१॥

यासां लोचननीलनीरजवने नेत्राऽलियुग्मं सदा
लीनं तस्य कदापि न स्म रमते दिव्येऽपि वस्त्वन्तरे ।
यासामङ्गतरङ्गिणी परिलसल्लावण्यपूर्णैव या
तृष्णां वर्धयतेतरां न शमयत्यापीयमाना दृशा ॥३४२॥

स ताभिरमरवरेण्य इव सदानन्दमग्नमानसो विषयसुखं मानयामास ।

पद्मरथस्तु राजा भुक्तभोगतया, सुचिरं विशुद्धविवेकतया, निसर्गतो विदितसंसाररूपतया सततं प्रेरित इव, परमानन्दस्पृहया समुपहसित इव, कुमारराज्ययोग्यतया समुपालब्ध इव प्राप्तकालया दीक्षया विरक्तकामः कुमारं व्याजहार–'वत्स ! कलितसकलविमलकलः सुधांशुरिव परिपूर्णो वर्तसे, तदिदानीमलङ्कुरु राकामिव राज्यश्रियम्, यतोऽस्माकं स्थितिरियम्– तावदेव प्रजापालनबालधारकताक्लेशमनुभवति भूपालो यावदद्यापि द्विधाऽपि कुमारो विषयोपभोगासमर्थो भवति । परतस्तु यदृच्छया चतुर्थपुरुषार्थसेवनमेव विधेयम्, तदधुना प्रतिपद्य राज्यं दीयतां क्रमागतप्रहरः ।

कुमारः पुनरिदमाकर्ण्य बाष्पप्लुतलोचनः सगद्गदकण्ठो मुकुलीकृतकरकमलयुगलो विज्ञपयामास–'देव ! किमनया राज्यश्रियाऽपराद्धम्–

१ प्रस्तररत्नः चन्द्रकान्तो मणिः ।

२. अत्र 'लोचन'शब्देन नेत्रयोः अधिष्ठानं विवक्षितम् । 'नेत्राऽलि॰'पदेन तु नेत्ररूपौ भ्रमरौ–नेत्रे ये श्यामे कनीनिके ते विवक्षिते इति विशेषता ज्ञेया ।

३. रमते स्म । अत्र 'नेत्राऽलियुग्मम्' एतद् 'रमते'क्रियायाः कर्तृ ।

४. परमः सर्वोत्कृष्टः निर्वाणप्राप्तिरूपः य आनन्दः तस्य स्पृहया उपहासं नीत इव ।

५. समुपालम्भं नीतः ।

६. विषयः–देशः, तथा विषया शब्द-रस-रूप-गन्ध-स्पर्शा इति द्विधा विषयाणाम् उपभोगे असमर्थ इति भावः ।

1 ॰सवती॰ ख । 2 ॰व यन् डे । 3 दृगः डे । 4 पद्मानं॰ ख । 5 ॰बालहार॰ डे ।
6 विज्ञाप॰ ख ।

निजभुजगजराजकन्धरात स्वयमवरोह्य निजापि राज्यलक्ष्मी. ।
मम करखरपृष्ठमप्रतिष्ठ भृशमधिरोपयितु प्रचक्रमे यत् ॥३४३॥

कि वा मयाऽपराद्ध यदह स्वच्छन्दताऽमृतसागरमग्नोऽपि प्रजापालनपारवश्यमरुस्थले स्थापयितुमुपक्रान्त. । किञ्च,

तावत् क्वापि कदापि केनचिदपि प्राज्ञेन राज्ञाऽपि ते
प्रज्ञाज्ञा स्खलिता न, या स्खलति कि सैपा वराके मयि ।
या वात्या तरवोऽपि न क्षमतमा सोढु स्वमूलैः स्थिता
पाताले प्रपुनाटझाटघटया सा नाम कि सह्यते ॥३४४॥

तथापि यदि तातपादा नाऽप्रसाद कुर्वते तदह मनाग् विज्ञपयितुमिच्छामीति वदन्नेवानुज्ञातो राज्ञा पुनराख्यत्—

शुश्रूषमाणस्तव पादपद्म राज्य प्रजा च प्रतिपालयामि ।
यत् स्वादयन्तो मधुर यथेच्छ जना भजन्ते कटुक कषायम् ॥३४५॥

ततोऽत्र स्थित एव तपोविधिम्--मया सेव्यमानचरणारविन्द --स्वेच्छया तातः करोतु, येन ममापि तातस्यापि मनोवाञ्छित सिद्ध्यति ।

ततो राज्ञा सस्मितमवाचि--'वत्स ! प्रज्ञावानपि छलितोऽसि मोहपिशाचेन कथमन्यथा त्वमपीत्थ मन्त्रयसे । किमु राज्यमपहाय तपस्तप्यमानाना सतामपि पुत्रादिसम्बन्धगन्धोऽपि न विधुरयति वैराग्यभाग्यम् ? आस्तामपर , कि भगवानपि जिनेन्द्र. परमवैराग्यतरङ्गिणीनाथ. कृतवानेवम् ? कारितो वा केनापि ? किमिदमपि नाकर्णित सकर्णेन—

गृहिप्रसङ्ग. स्तोकोऽपि यतीना पथ्यकारणम् ? ।
न पथ्यकारण शीत प्रत्यग्रज्वरिणा जलम् ॥३४६॥

तत कि बहूदितेन ? त्यज कदाग्रहममुम् । किमनेन विवेकिजनानुचितेन वचनेन ।

१ 'झाट 'शब्दः सस्कृतभाषाया न प्रचलित किन्तु देश्यप्राकृते लतागहनवाची 'झाड '-शब्दः 'देशीशब्दसंग्रहे आचार्यहेमचन्द्रेण "झाड लयगहणे " (-देशीश०वर्ग ३, गा०५७) निर्दिष्ट । अत्र ग्रन्थकारेण स एव शब्दः सस्कृते अनुकृत इति बोध्यम् ।

२ पथि अकारणम्-यतीना मार्गे स्तोकोऽपि गृहिप्रसङ्गः-गृहस्थसङ्ग -ने कारणम्-न सहायविधायकः इति आपेक्षिकम् एतद वचनम् ।

'गृहप्रसङ्ग ' इति पाठान्तरेऽपि अयमेव भाव । पूर्वानुभूत यो गृहप्रसङ्गः रत्यादिक्रीडा-स्मरण वा कषायकरणादिप्रसङ्गस्मरण न यतिमार्गे सहायकारि ।

1 °दा न प्र° ल विना । 2 विज्ञाप° ख । 3 °नो मो° ख । 4 गृहप्रसङ्ग स्तो° खल ।

शृणु रहस्यम्—

शास्त्रज्ञ. कुलजः क्षम. प्रशमवानाविर्भवद्विक्रमो
भक्तोऽसि त्वमतः पुन. पुनरय राज्यार्थमादिश्यसे ।
तस्मात् स्वीकुरु काश्यपीमशरणा त्यक्ता मया सर्वथा
दीक्षां पूर्वजसेवितां भगवतीमाराधयिष्ये यत. ॥३४७॥

ततो दुर्लङ्घ्यतया गुरुशासनस्य, विनीततया प्रकृते. प्रतिपन्ने कुमारेण तदादेशे वसुधावासव. पुनरब्रवीत्—'वत्स ! यद्यपि भवत [1]कोदण्डस्येव समस्ति समस्ताऽपि गुणयुक्तिः, [2]कमलस्येव दोषैकविमुखता, [3]रथाङ्गस्येव प्रियमित्रता, [4]युग्मधर्मिण इव बन्धुरहितता, गर्भरूपस्येव नालस्यघटना [5]नैसर्गिकी तथापि शिक्षाप्रदानाय मुखरयति मामेष ते विनयः ।

यद्वा सद्भिर्निग्रहीतुं प्रमादं शिक्षालेशो धीमतोऽपि प्रदेय. ।
[6]मात्रा चक्षुर्मण्डल दृष्टिदोषं हर्तुं कार्यं भूषितस्यापि सूनोः ॥३४८॥

इह हि तावदात्मनीनेन सर्वेणापि कुलीनेन गुरूपदेशसारसर्वस्व द्वयमिदमवधारणीयम् । खलजनस्य परीहार , सज्जनस्य च स्वीकारः सततमेव विधातव्य एव । खलो हि

१. कुमारपक्षे गुणाना—सद्गुणाना राज्यपालनक्षमगुणाना वा युक्तिः । कोदण्डपक्षे गुणः प्रत्यञ्चादवरक , तस्य युक्तिः—योजना ।

२. कुमारपक्षे दोषान् प्रति, दुर्गुणान् प्रति एकम् असाधारण वैमुख्यम् । कमलपक्षे दोषा—रजनीं प्रति एकं वैमुख्यम् ।

३. कु० पक्षे प्रियमित्रता—मित्राणा प्रियत्वम् । रथाङ्गपक्षे प्रियमित्रता—सूर्यस्य प्रियत्वम् ।

४ कु० पक्षे बन्धुराय—सुन्दराय हितता, सौन्दर्यप्रियत्वम् , युग्मधर्मिपक्षे बन्धुरहितत्वम्—भ्रातृविहीनता । जैनपुराणे प्रसिद्धमेतद् यद् अतिशयप्राचीनतमे समये प्रथमतीर्थङ्करश्रीऋषभदेवसमये या प्रजा आसीत् सा युग्मधर्मिणी, तासु युग्मधर्मिणा पुरुषाणा या भार्या आसन् तासा कुक्षौ युगलमेव अजायत—एकः पुत्रः, एका च कन्या, नान्यत् किमपि संतानान्तरम् । अत एव स पुत्रः बन्धुरहित'—भ्रातृविहीनः ।

५. कु० पक्षे न आलस्यघटना इति पदद्वयम् । आलस्यस्य घटना आलस्यघटना सा कुमारे न, अर्थात् कुमारः आलस्यरहितः । गर्भरूपपक्षे तु नालस्य घटना इत्येवं पदद्वयम्, गर्भनालस्य-घटना । गर्भनाल प्रसिद्धम् ।

६. मात्रा—जनन्या भूषितस्यापि सूनोः दुष्टजनप्रसक्त दृष्टिदोष हर्तु श्याममषीतिलकमण्डल विधेयम् इति लोकप्रसिद्धम् । काचिद् माता श्याममषीतिलकमविधाय सूनो कण्ठे श्याम सूत्रमपि विन्यस्यति इत्यपि लोकविदितम् ।

७ आत्महितवाञ्छुना—स्वहितैषिणा ।

1 'स्येव गुण° खल । 2 हन्तुं का° ख ।

हताशो यस्मादुलूक इव दोषैकप्रिय. सन्तमसन्त सवितारमपि मन्यते। न हीनं पूर्णमण्ड-लोऽपि सन्तापमकृत्वाऽस्तमयते। यश्चक्षुरादिमान् स न खलोपकरणपरो भवति। नै-खल-क्षितश्रीकता नरेन्द्रेण प्रजाना करशाखाना च विधेया। स वै-श्वानरो यो मासमासाद्य सस्ने-हमतिपरिचितमपि क नोपतापयति। न च प्रतिभासमानोऽपि शुन. पिशुन पुनरितर.। नापितोऽपकारकोऽपि साधुः साधुनापितोपकारको मन्यते। पिशुनेनापि शुनेर्नादेरपि न

१. खलः—दोषाः—दूषणानि एव खलस्य प्रियाणि। उलूक.—दोषा—रजनी, उलूकस्य रजनी एव प्रिया। यो रजनीप्रिय उलूकः स सन्त विद्यमानमपि सूर्यम् असन्त मन्यते। एवमेव दोषप्रिय खलः सन्तमपि पितरम् असन्त मन्यते।

२. न हि+इनः-नहीनः। इनः—सूर्य पूर्णमण्डलोऽपि सतापम् अकृत्वा न हि अस्तम् एति, सूर्यः सन्ताप—समीचीन ताप करोत्येव, विना ताप कृत्वा न हि सूर्यः अस्ततामेति इति विदितम्।

३. खस्य—सूर्यस्य, लोपकरणम्, तस्मिन् परः अर्थात् चक्षुरादिमान् नर 'सूर्यो नास्ति' इत्येव न मन्यते। "खस्तु सूर्ये" (—हैम० अनेका० का० १, श्लो० ६)। तथा खलस्य यानि उपकरणानि दोषयुक्तानि साधनानि तेषु परः—परायणो न भवति. न खलोपकरणपरः।

'चक्षुरादिमान्' अत्र आदिपदेन मेधा—प्रज्ञा—विद्यादयो गुणा ग्राह्या।

४. खलैः क्षित खलक्षितम्—खलकृतक्षय', खलक्षिता श्रीः यस्या सा खलक्षितश्रीः अत 'क'प्रत्यये सति खलक्षितश्रीका तस्या भाव खलक्षितश्रीकता। प्रजाना श्री खलै क्षिता—क्षीणा भवेत् एतादृशी परिस्थिति नरेन्द्रेण न विधेया। अत्र 'न+खल' इति पदद्वयम्।

५. करशाखानाम्—अङ्गुलीना च नखैर्लक्षिता युक्ता श्रीर्यस्या सा नखलक्षितश्रीका तस्या भावः नखलक्षितश्रीकता अर्थाद् अङ्गुलयो हि नखलक्षितश्रीका—नखशोभायुक्ता विधेयाः। अत्र 'न' इति भिन्न पद न, परन्तु 'नख' इत्येवम् अखण्ड पदम्।

६. सः प्रसिद्ध., वैश्वानर.—अग्निः, सस्नेहमपि—घृतादिस्नेहसहितम् अपि क पदार्थ जीव वा न उपतापयति? अत्र 'वैश्वानर' इति एक पदम्। वैश्वा नरः—स वै श्वा—कुक्कुर, नरो वा पुरुषः यः मासमासाद्य अन्य प्राणिन मनुष्य वा सस्नेहम्—अतिपरिचितमपि क न उपतापयति? अत्र 'मास'शब्देन कुक्कुरपक्षे प्रसिद्ध मासमेव ग्राह्यम्, नरपक्षे रूप-रसादिकविषयरूप मास बोध्यम्। अत्र तु 'वै श्वा नर.' इत्येव पदत्रयम्।

७ प्रतिभासमानोऽपि—दीप्यमानोऽपि। पिशुनः—खलः। शुन.—श्वानात्, न इतर —न भिन्नः—पिशुन-शुनौ समाना इति भावः।

८. अपकारकोऽपि क्षौर कुर्वन् छिन्दानोऽपि नापित' साधु अर्थात् पिशुन' नापितादपि हीनः। साधुना—अखलेन 'पिता उपकारकः' इति मन्यते—साधुना पिता आद्रियते। खलस्तु उपकारकमपि पितरं न मन्यते। अत्र 'साधुना 'पिता' 'उपकारक'' इत्येव पदत्रयम्।

९. आदेरपि—प्रारम्भकालादपि पिशुनः कण्ठगतप्राणोऽपि—आसन्नमरणोऽपि न गुणं गृह्णाति, शुनोऽपि गुण—रज्जु—दवरक न गृह्णाति।

1 प्रतिप्रतिभा° डे।

गुण. कण्ठगतप्राणेनाऽपि गृह्यते । ततो वत्स ! साधूनामाननेनापि पुरस्कृता सद्गतिर्महते गुणाय । सा-धूपकारघटना सदोषधीयुक्त्याऽपि सेव्यमाना कस्य नाम नामोदसम्पदं सम्पादयति ? यो हि साधुना हारेणेव गुणेनाध कृतोऽपि, स को नाम नायको न भवति । नायकेनापि सत्त्रासता द्विधापि न विधेया, सत्त्रासो हि चेतनस्तरलतामेव प्रतिपद्यते । किं बहुना, प्रभवतापि विशुद्धपक्षेणैव राज्ञा सङ्गतिर्विधेया । स हि कृशमपि पूर्णताम्, विकलमपि सकलताम्, स्तोकतेजसमपि पूरिततेजस्कतां राजानं नयति । मलिनपक्षस्तु विपरीतकारक एव । यस्माद् गुणसज्जन सज्जन एव बहु मन्तव्य ।

यौवनमदस्यापि नावकाशो दुर्जनस्येव चेतनेन देय । यतो हितोऽपि यौवनमदस्तथा विपयाधिक्य सम्पादयति यथा चेतनोऽप्यचेतनता विभ्राणो महाप्रभावेणापि मन्त्रेण मन्त्रिणा सुतरामक्षमोऽनीशश्च सम्पद्यते । न च गौरीशमन्तरेण पुरुषान्तरेणापि घटते, लब्धप्रसरे वा यौवने तरुणेन प्रतापवता कुलीनेन चपलस्वभावतामाश्रितेन स्थिरा छायापि न प्राप्यते । ततो यौवनेनापि यथा न जीयसे तथा यतितव्यम् ।

१. साधूना–सज्जनानाम्, आननेनापि–मुखेन अपि ।

२. साधूनामुपकारघटना अथवा सा धूपकारघटना, धूपो हि आमोदं सम्पादयति ।

३. सती–शोभना या ओषधी सा सदोषधी, तस्या युक्त्याऽपि अर्थात् ओषधीसेवनवद्, अथवा दोषसहिता धीः सदोषधीः तस्याः युक्त्या–योगेन, धूपकारघटनापक्षे धूपे हि धूमो दोषः ।

४. गुणेन–दवरकेण, सद्गुणेन वा । हारपक्षे दवरकेण, साधुपक्षे सद्गुणेन । गुणेन–दवरकेण हि हारस्य नायकरूपः चन्द्रकः अधःक्रियते । साधुपक्षे अधःकृतः–नम्रता नीतः को नाम नायको न भवति ? ।

५. सता–सज्जनाना त्रास सत्त्रास, तस्य भाव सत्त्रासता, नायकेन हि सतां त्रासो न विधेय । त्रासेन सहित. सत्त्रास तस्य भाव सत्त्रासता- त्राससहितता न विधेया । सताम् सज्जनाना त्रास अथवा सताम् विद्यमानानाम् सामान्यतया कस्यापि त्रास. इत्येव सत्त्रासताया द्विविधता बोध्या ।

६ प्रभवता–सामर्थ्यवता अथवा उदीयमानेन राज्ञा । राज्ञा नृपेण, राज्ञा–चन्द्रेण । नृपपक्षे विशुद्धपक्षेण–गुणयुक्तशुद्धपक्षीयसज्जनेन सह सगतिर्विधेया । सज्जनानाम् एव सगतिर्विधेया इति 'एव'कारेण अवधारणात् नान्येषा सगति कार्या इति भाव । चन्द्रपक्षे विशुद्धपक्षेण–उज्ज्वलपक्षेण–शुक्लपक्षेण सगतिर्विधेया । चन्द्रपक्षे शुक्लपक्षो विशुद्धपक्ष ।

७. मलिनपक्षः- नृपपक्षे दुर्गुणयुक्त पक्षः मलिनपक्ष, चन्द्रपक्षे कृष्णपक्ष तमोयुक्तपक्षः मलिनपक्ष. ।

८ नामसज्जनः, –य नाम्ना एव सज्जन, स्थापनासज्जन–केवलम् आकृत्या सज्जन, द्रव्यसज्जनः–भूतकाले सज्जन, भाविनि वा काले सज्जनो भविता, भावसज्जनः वास्तविकरूपेण सज्जन.–इत्येव चतुर्विधेषु सज्जनेषु यो भावसज्जन. स गुणसज्जनो मन्तव्यः, अत. तादृश एव सज्जनो बहु मन्तव्य. नान्यः इति भाव ।

1 गुणक° खला । 2 °स्कृतस° डे । 3 नामोद सम्पादयति डे । 4 °व सङ्गति° डे । 5 °मदनस्यापि खल ।

तथा, राज्ञा श्रीमदादयोपि[1] केचिदेव सन्निधापयितव्या न पुन. सर्वेऽपि, यतः केचिदेतेभ्यस्त्यज्यमाना एव समुद्रस्येवापारिजातत्व[2] घटयन्ति, ततो श्रीमदादयोपि वत्सेन हेया एव।

किञ्च, दुर्जनयौवनश्रीमदादिवद् व्यसनसप्तकमपि त्यजतामेवाखिलानामपि कुलीनानामिहामुत्र कल्याणमन्यथा पुनरकल्याणमेव। वत्स! भवता नलक्षितिपाल. किमाकर्णितो [3]नैप-धी-राज्याखण्डलाभजयलक्ष्मीरपि दुरोदरव्यसनतो हारितवान्। दुरोदरग्रस्तमनसो हि सत्यमत्यापि शीललीलयापि कुलबलेनापि जातिपङ्क्त्यापि यशोलेशेनापि घनध्वनिनापि धर्मनर्मणापि[1] विमुक्ताः सन्तानके[2] विगुप्यन्ते। तत. कदाचिदपि[3] नि शेपव्यसनराजस्य द्यूतस्य नामापि न सहनीयम्।

मासमपि सर्वथाऽप्यहिसामूलस्य[4] सर्वस्य धर्मस्य प्रतिपन्थीति स्वदेशेऽपि निवारणीयम्। इह सद्वेषरागोच्छेदिका[4] समस्ताम्बरतोऽपि वरेण्या दिव्यांशुकयुक्ति प्राप्तोऽपि शोपितजडाशयज्येष्ठशुचिसमयाऽसमत[5] मासलम्पट समासन्नमपि क सकर्ण करोति। परम् आमिषपरा

१ 'श्रीमदादयः' मदो नाम गर्व'। अत्र आदिशब्देन विविधा मदा ग्राह्या। ते च एवम्-श्रीमदः, रूपमदः, यौवनमद, दाक्ष्यमद., वैभवमदः इत्यादय'। अर्थात् एतेषु मदेषु न सर्वे सन्निधौ रक्षणीयाः परन्तु केचिद् योग्या एव सनिवारयितव्या.।

२. यथा समुद्र. अपारिजातः-पारिजातवृक्षरहित. तथा राजकुमारोऽपि अपाऽरिजातः-अपगता अरिजाता' यस्य स. अपारिजात तद्भाव-अपारिजातत्वम्। अरिजाता.-अरिसमूहा. अपगता विनष्टाः।

३. 'नैषधीराज्याखण्डलाभ°' इत्यादिवाक्यस्य अर्थद्वयम्, तथाहि- न+एष नैष'। निषधस्य अपत्य नैषधीः नलनृपः। एष च राज्ये आखण्डलाभः-इन्द्रसमानः जयलक्ष्मी अपि हारितवान्। आकर्णितो न? एष धियम् राज्यस्य आखण्डलाभरूपा जयलक्ष्मीश्च एतद् द्वय हारितवान् द्यूतव्यसनेन। अत्र काव्यस्य चित्रतया 'आखण्डलाभ' इत्यत्र विसर्गस्य लोपो बोध्य। समस्तपदपक्षे तु विसर्गस्य न प्रयोजनम्।

४ शोभनश्चासौ वेषश्च सद्वेपः, तस्य रागोच्छेदिकाम्-उद्भटवेषरहितताशुताम् एतादृशी दिव्यांशुकयुक्तिं-दिव्यवस्त्रपरिधानयुक्ति त्व प्राप्तोऽपि, तथा द्वेषेण सह य' रागः सद्वेषराग तस्य उच्छेदिका-विनाशिका दिव्यांशुकयुक्तिम् अर्थात् यः अनुद्भट वेष परिदधाति त प्रति प्रायः न कश्चिद् द्वेष वा राग वा करोति इति तात्पर्यम्।

५ शोपितजडाशय, शोषितजलाशय' यः ज्येष्ठो मास, शुचिः-आषाढो मासः, तयोः समयः-ग्रीष्मसमयरूपः कालः, तस्मिन् काले असमत परिधेयतया असंमतम्, मासल पटम्-स्थूल वस्त्रम्, समासन्नम्-निकटतमम् अपि क' सकर्ण' करोति-न कश्चिदपि अर्थात् जलाशयशोषके ज्येष्ठे आषाढे च मासे न कोऽपि दक्षः स्थूल वस्त्र परिदधाति, तस्मिन् हि उष्णसमये सर्वो हि

1 °पि मुक्ता. डे। 2 सन्तानकेऽपि कुप्यते ख। 3 कदापि दोपव्य° डे। 4 °लस्य धर्मस्य डेल।

हि बुद्धिः क न सक्षयति ? क वा नोद्वेजयति । तेनैवाहि-सोल्लासं कुर्वाणः समाधिसम्पादनेन वामाङ्गज इव धन्य एव स्वपरहितः सम्पद्यते ।

मधुपोऽपि नावदातस्वभावः कश्चिदीक्ष्यते यतोऽसौ पुष्पवतीमपि बहुतरलतां पुरस्कृत्य का न स्पृशति यद्वानेन मधुपरागसादरेण गन्तुमनुचिताऽप्यसौ सुतरामासेव्यते तेन चैत्र-मकरन्दयोरेव 'मधु' इति ध्वनिव्यपदेशोऽपि नियोजनीयः । तथा य सदास्यो न वा सदास्यैः

जनः सुसूक्ष्मं लघुतमं वस्त्रं परिदधाति इति तु वस्त्रविषयो भावः । मांसपरिहारविषये तु अयं भावः—ये जडाशयः—मूढाशयः शोषितः—दूरीकृतः ते ज्येष्ठाः—उत्तमाः पुरुषाः तथा शुचयः पुरुषाः—पवित्राः पुरुषाः, तेषाम् असम्मतम् मांसलम्पट—मांसाहारलुब्धं नरं कः सकर्णः समासन्न-मपि—निकटवर्तिनं करोति इति भावः ।

१ अहिंसायाः उल्लासम् अहिंसोल्लासम्, तथा अहिं सोल्लासम् इति द्विधा पदविभागः । अहिंसोल्लासं कुर्वाणः, राजकुमारपक्षे अहिंसायाः उल्लासं—अहिंसासमाचरणं कुर्वाणः । वामाङ्गजपक्षे वामाङ्गजः—पार्श्वनाथः स अहिं सोल्लासं कुर्वाणः—श्रीपार्श्वनाथेन कमठतापसेन अज्ञानवशतया पञ्चाग्नि-मध्ये दह्यमानम् अहिं रक्षित्वा तस्य समाधिः संपादितः । अन्योऽपि यः अहिंसासमाचरणं करोति स सर्वैः सर्वेषां प्राणिनां समाधिं संपादयति ।

२ पुष्पयुक्तां लताम्, पुष्पवतीं रजस्वलां नारीम्, मधुपः—भ्रमरः तथा मधुपः—मद्यपः । बहुतरलता—बहुचपलताम् । भ्रमरो हि बहुचपलः । मद्यपोऽपि इन्द्रियवशतया बहुचञ्चलः । असदा-चारप्रवणतया मद्यपो हि रजस्वलामपि नारीं स्पृशति अत एव न अवदातस्वभावः—न उत्तमस्वभावः । मधुपः—भ्रमरोऽपि कृष्णवर्णत्वेन न अवदातस्वभावः—नोज्ज्वलवर्णः ।

३ मधुनः परागः तत्र सादरेण मधुपेन—भ्रमरेण, मद्यपपक्षे मधुपस्य—मद्यपस्य रागविषयक—आदरेण स्त्रीविषयकरागबाहुल्येन । अत्र 'मधु + पराग' इति तथा 'मधुप + राग' इति द्विधा पदविभागः ।

४. 'मधु' शब्दस्य नानार्थता प्रसिद्धा अनेकार्थकोशे—"मधु चैत्र-ऋतु" इत्यादि तथा "मधु क्षीरे" "पुष्परसे" इत्यादि (-हेम-अने० का० २, श्लो० २४७, २४८)। अत्र मधुशब्दः चैत्रे मासे पुष्परसेऽपि च इत्येवम् अर्थद्वये प्रदर्शितः । तेन अत्र 'तेन' इति तृतीयान्तम् अखण्डम् अथवा 'ते' 'न' इति पदद्वयम् । ते तव, त्वया, अयं 'मधु' इति ध्वनिव्यपदेशः न नियोजनीयः । एतादृशदोषकारकाणाम् अर्थे त्वया 'मधु' इति शब्दो न नियोजनीयः इति आशयः ।

५ सत्—शोभनम् आस्यं—मुखं यस्य स सदास्यः । दास्येन—दास्यभावेन सहितः युक्तः सदास्यः । एवं सदास्यः शोभनमुखः, अथवा सदास्यः—दासभावसहितः—परतन्त्रः । अर्थाद् यः सदास्यः—शोभनमुखः परन्तु न सदास्यः—परतन्त्रतानरागदासभावयुक्तः—तथा स सदाचारपरायणत्वेन दास्या किङ्कर्या सममेव सहैव पणरमणीः अपि त्यजति—यथा दासीं त्यजति तथैव पणरमणीः अपि त्यजति इति भावः । पणरमणी नाम पणेन मूल्येन या रमणी सा पणरमणी—वाराङ्गना ।

1 तेन मकरन्द-चैत्रयोरेव ख । 2 मधुध्वनि° खल । 3 °यः । यः स° ख ।

स दास्या सममेव पणरमणीरपि परित्यजति। न खलु भुजङ्गप्रियाणां सर्पिणीनामिव भुजिष्याणां कोऽपि गोचरं गतो धर्मार्थस्तानपरिभ्रंशं न लभते। वेश्याजातिरपि वात्येवानुकूला समस्तसमृद्धिपूर्णमपि का-या-न-पात्रं विसूत्रयति। नो वा हितदृष्टिरेव समुद्ररमणीषु निमज्जतितरां समुद्रपणरमणीषु पुनरवहितदृष्टिरपि। याश्च जठरे निक्षिपन्ति सुरा ननिमिषानपि सदा ताः कथमपरैः समास्वादयन्त्यो घृणीयन्ते? । ततो वसुरतचित्तानामपि न वसुरतचित्तानां पणवधूनां सम्भोगपरः सुरा-मांसस्पृहां त्यजन्नपि न तत्त्वतः सुरामा-सस्पृहां त्यजति। तदेतास्वपि न विश्वसनीयम्।

पापर्द्धिरपि पापर्द्धिरेव यदत्र प्रसक्ता पापीयांसोऽनेकधा सर्वदा वागुरावासितचेतसो द्विधा-पि-शुनानुगम्यमानचेतसः सर्वतोऽपि चापशब्दप्रगल्भा निर्वाणगुणसमृद्धिकं धर्ममपि

१. भुजङ्गाः हि सर्पाः गणिकाधिपतयो वा विटपुरुषाः। भुजिष्या वेश्या वाराङ्गनाः, तासां गोचरं गतः धर्मार्थस्तानपरिभ्रंशं न लभते इति न, अपि तु लभते एव। धर्मस्य अर्थस्य च 'स्तानपरिभ्रंश'शब्देन अन्वयः। 'गोचरं' इत्यस्य 'कोऽपि' इति विशेषणमपि ज्ञेयम्-कोपि-गोचरम् अथवा कः अपि गोचरम् इति पदविभागः। सर्पिण्यो हि सदा कोपपरायणा एव अतः सर्पिणीपक्षे कोपिगोचरं कोपयुक्तं गोचरम् इत्यर्थो बोध्यः, तथा कः अपि जनः अर्थात् सर्वो जनः इति भावोऽपि भावनीयः।

२ या अत्येव अनुकूला, का? वेश्या, समस्तसमृद्धिपूर्णमपि पात्रं पुरुषं न विसूत्रयति-न नाशयति? अपि तु सर्वा एव वेश्या ऋद्धिसपन्नपुरुषपात्रं नाशयत्येव। वात्या इव, वात्या-वातानां समूहः-झञ्झावात, सा का। वात्या या पात्रम्-यानपात्रं-प्रवहणं न विसूत्रयति? सर्वा एव वात्या यानपात्रं विनाशयत्येव। अत्र 'का या न पात्रम' तथा 'का यानपात्रम्' इति द्विधा पदविभाग।

३. हितदृष्टिरेव समुद्रासु-मुद्रासहितासु रमणीषु नो वा निमज्जतितराम्, यः अवहितदृष्टिः-सावधानदृष्टिः सः अपि समुद्रपणरमणीषु नो निमज्जति, अर्थात् समुद्राः मुद्रासहिता ये पणा अक्षाः तैः या रमन्ते क्रीडन्ति तासु द्यूतप्रियासु रमणीषु न निमज्जति।

४. ननिमिषान्-अनिमिषान् मत्स्यानपि।

५. वसुरतचित्तानां-धनरतचित्तानाम्, नवसुरतचित्तानां-नवरतक्रीडनचित्तानाम् पणवधूनां सम्भोगपरः। सुरामासस्पृहां त्यजन्नपि, तत्त्वतः-परमार्थेन, सुरामा-सुभार्यां सस्पृहां न त्यजति-पणवधूसम्भोगपरायणः कदा च सुरायां मांसस्य स्पृहां त्यजन्नपि सुरामां-सुभार्याम् अभिलाषसहितां न त्यजति तत् तस्मात् कारणाद् एतासु पणवधूषु अपि न विश्वसनीयं, सदाचारपरायणेन। अत्र 'सुरा-मांसस्पृहाम्' तथा 'सुरामा सस्पृहाम्' इत्येव पदविभागः।

६. द्विधाऽपि शुनाऽनुगम्यमानचेतसः पापर्धयो हि आखेटकाः पिशुनानुगम्यमानचेतसः तथा शुनानुगम्यमानचेतसः, आखेटका हि शुनानां मण्डलम्, आखेटकसागमेयाणां मण्डलं पालयन्ति ते च शुनाः-आखेटकान् नयन्ति मार्गं प्रदर्शयन्ति इति विश्रुतम्। अत्र 'द्विधा पिशुना°' तथा द्विधाऽपि शुना° इति पदविभागः।

७ अत्र चापस्य-धनुषः शब्देन प्रगल्भा इति तथा सर्वतोऽपि च अपशब्देन परस्परम् अपशब्दप्रयोगेण प्रगल्भाः-धृष्टाः-निर्लज्जा इति भावः। अत्र 'च अप°' तथा 'चाप°' इति विभागः।

1 °ति सा विहितदृष्टिरिव डे। 2 °रविहि° डे। 3 °स्मा स्वाद° डे। 4 °स्पृहां त्यजति इदि न तत्त्वत डे। 5 प्रगल्भा पा° डे। 6 °मानचेष्टाः स° डेल।

क्षिपन्त क्रूराशया: सावधानवुद्धय: कुरङ्गे न तु रङ्गे, ततः सर्वथा नरकपथप्रस्थानरसिकै-रेव आखेटकविधिरनुमत । तेन कारणेनाभ्युदयनिःश्रेयसार्थिना तात ! त्वया निजजन-पदेऽपि रक्षणीयोऽस्य व्यसनस्य प्रचारः ।

चौरिका पुनरियमत्यन्तविरुद्धतया केर्नाम न निषिध्यते [१] । चौरसम्बद्धः पुत्रोऽपि राजपुरुषैर्दृश्यते जनकोऽपि परस्वापहारकादपि परास्वापहारको मात्रयाऽप्यधिकः पापी-यस्तया, कथमन्यथा क्वापि कश्चिद् वधकोऽपि लब्धप्रसरो दृश्यते चौरस्तु निगृह्यत एव यत असौ अर्थमपहरन् परेषामसूनमपि परमार्थत सुतरामपहरति । किञ्च, चौरिका चौर-स्यैव तदुपेक्षकस्यापि भूपतेरसाधुत्व प्रथयति, तदसौ [1][3] प्रजाप्रतानिनी दवदेश्याऽनेकधा रोचितश्रीकेणोन्नतिघनेन शमनीयैव वत्सेन ।

परप्रियोपभोगरसिकत्व पुनरिद कण्ठगतैरपि [3] प्राणैर्नाचरित विमलकुलजन्मभिश्चतुर-चेतोभि । दौःशील्यलौल्याधीनधिय. कुधियो [४] नरकान्तपरकान्तानुगतमतयो विशुद्धविवेक-

१. कुरङ्गे-हरणे. 'न तु रङ्गे'-न तु नर्तनस्थाने सावधानवुद्धयः । अथवा 'न तुरङ्गे' इत्येव पदविभागे तुरङ्गे इति चित्ते अर्थात क्रूराशयाः चित्ते न सावधानवुद्धय· ।

२. अत्र परस्वाप° तथा परास्वाप° इत्येव द्वे पदे । तत्र 'परस्वाप पद पञ्चमात्रिकम् तथा 'परास्वाप' पद षण्मात्रिकम् । एव च सति षण्मात्रिक पदम् मात्रया अधिकम् । 'परस्वाप°' इत्यादिकस्य तथा 'परास्वाप०' इत्यादिकस्य अयम् अर्थ—

परस्य स्वम् धनम् तस्य अपहारकः, परस्य स्वाप –निद्रा–तस्य हारकः ।

'परास्वाप०' इत्यादिपदस्य अयम् अर्थ·—परस्य असवः प्राणाः तेषाम् आपहारकः (आ समन्तात्, अपहारक·) अथवा परस्य आस्वाप· (आ समन्तात् स्वापः–सुखनिद्रा) तस्य हारकः अथवा चित्र–काव्यत्वेन 'परस्वाप० इत्येव विवक्षणे परस्य स्वम् धनम् तस्य अपहारक इति । चौरो हि परास्वाप–परनिद्रा हरत्येव । अत्र पर+असु+आपहारक इति, पर+आस्वाप+हारक इति, तथा पर+स्व+अपहारक इति पदविभागः । अत्र असवः–प्राणाः, अथवा धनरूपाः प्राणा वोध्याः ।

३. तत्–तस्मात् कारणाद् असौ चौरिका प्रजाप्रतानिनी प्रजासु प्रकर्षेण विस्तारवती जायमाना दवदेश्या–दवो दवानलः तत्समाना अत· सा उन्नतिघनेन उन्नतिरूपमेघेन शमनीया एव । उन्नति प्राप्तो मेघः सर्वताप्शमनः, तथा उन्नतिम अभ्युदय प्राप्तो नृप· सर्वदूषणशमन इति ।

४. नरकपातरूप· अन्त· परिणामः यस्याः सा नरकान्ता । नरकान्ता परकान्तानुगतमति येषा ते नरकान्तपरकान्तानुगतमतयः । परस्य कान्ता परकान्ता । परकान्ताम् अनुगता मतिः परकान्तानुगतमतिः ।

५. विशुद्ध विवेक, तद्रूप नयन नेत्र, तेन रहिता, अर्थात् विशुद्धविवेकरूपलोचनरहिता अपि ते न विशुद्धविवेकनयनरहिता· विशुद्धः विवेक नयश्च येषा ते विशुद्धविवेकनयाः, तादृशा ये नरा मानवा· तेषा न हितरूपाः, अर्थात् परदारपरायणा नरा विशुद्धविवेकनयवता नराणा न हितरूपा· अकल्याणकारिण· अत्र 'विशुद्धविवेकनयनरहिता' इति 'न विशुद्धविवेकनयनरहिता' इति च केवल शब्दापेक्षया विरोध, अर्थापेक्षया तु न कोऽपि विरोध· । 'नयनरहिताः' इति पदद्वयम् विरोधपरिहारपक्षे 'नय-नर-हिता' इत्येव पदत्रयम ।

1 ततस्त्वया ख । 2 प्रजापतिनेनिनाद° ल । 3 प्राणैरपि नाच° डे ।

नयनरहिता अपि न विशुद्धविवेकनयनरहिता, यशोभयाविकला. अपि नयशोभया विकला:, द्विधापि नवां धवपरम्परा वहु मन्यन्ते, द्विधापि कामसुखसमृद्धि न समासादयन्ति । किं वहुना. परकीया-रामा नितरामभिरामा यदा मालिकेन नालिकेन च दृश्यन्ते तदा स्वस्य नवकुलजातिरमणीयवालकालवालोपेक्षा विधीयते, तदत्रापि व्यसने स्व-परयोरवकशोऽपि रक्षणीयः । किञ्च, विषमव्यसनार्णवे तदस्मिन् पिशुना स्वार्थकृते प्रभु क्षिपन्ति, सुजनास्तु समुद्धरन्ति मग्नम, तदमीभि सह सङ्गमो विधेयः । अपि च—

१. यशः-कीर्तिः, भयम्-भीतिः, यशसः भयम यशोभयम् अर्थात दुःशीलाना यशसः नाशो भवति इति यशोभयेन अविकला सपूर्णा अर्थात यशोनाशभयेन सपूर्णतया युक्ताः एतादृशा अत एव नयशोभया, नयाना-नीतीना न्यायमार्गाणा शोभया विकला रहिता-न्यायमार्गरहिता इति आशयः । यशोभयाविकला इति एक पदम् तथा नयशोभया विकला इति पदद्वयम । अत्र ‘यशोभयाविकला’ इति ‘नयशोभया विकला’ इति च शब्दापेक्षया विरोध परन्तु अर्थस्तु पूर्वदर्शित सुसगत एव ।

२. नवां धवपरम्पराम इति एकोऽर्थः । नवा-नवीनाम, धवपरम्परा-पतिपरम्परा वहु मन्यन्ते-नवधवस्वीकारपद्धतिं सादर स्वीकुर्वन्ति-पातिव्रत्यपालन न मन्यन्ते इति भावः । ‘न वान्धवपरम्पराम्’ इत्यपि पदविभागः । न निषेधे वान्धवपरम्परा न वहु मन्यन्ते । वान्धवा-स्वजनाः । अत्र व-वयो ऐक्य वोध्यम्, तथा ‘नवाम+धव°’ इत्यत्र सन्धौ ‘नवान्धव’ इति अन्त्यमकारस्य ‘न’कारो विधेयः-अत्र सन्धिविधानाय “तौ मुमो व्यञ्जने स्वौ” [हैम० १।३।१४] इति सूत्र प्रयोजनीयम् ।

३. अत्रत्या सासारिककामसुखसमृद्धिं नासादयन्ति । तथैव पारत्रिकस्वर्गादिकामसुखसमृद्धिं नासादयन्ति । तथा काम् असुखपरम्परा-दुःखपरम्परा न आसादयन्ति-सर्वप्रकाराणि दुःखानि प्राप्नुवन्ति दुःशीला इति भावः इत्येव विचारणया अर्थापेक्षया द्विधात्व वोध्यम् ।

४. मालिकेन नालिकेन मूढेन च इत्यनयोः पक्षे परकीयाऽऽरामा इत्येवम् ‘आराम’-शब्दो वोध्यः, परकीयाऽऽरामाः परेषाम् आरामा-उद्यानानि नितराम् अभिरामाः-मनोहरा इति । मालिकः-आरामरक्षकः, नालिक च कमलम् । ‘अज्ञ’अर्थसूचकोऽपि दीर्घ ईकार युक्तः ‘नालीक’शब्दः शब्दकोशे विद्यते सोऽपि अत्र ग्राह्य, अर्थश्च नालीकेन अज्ञेन मूढेन इति ।

कुमारपक्षे मूढपक्षे च परकीया रामाः नार्यः नितराम अभिरामा दृश्यन्ते तदा नवकुलजातिरमणीयवालकालवालोपेक्षा विधीयते । वालकाले याः वालाः तासा वालकालवालानाम् इति । मालिकपक्षे वकुल-जाति-रमणीयवालकानाम आलवालाः-केदाराः तस्य उपेक्षा, न इति निषेधे विधीयते अर्थात् परकीयोद्यानानाम् अवलोकने स्वस्य स्वगृहस्य प्राङ्गणे ये कृताः वकुल-जाति-रमणीयवालकाना ये आलवाला – केदारा, तेषाम् उपेक्षा न विधीयते । वालकः भाषाया ‘वालो’नाम्ना प्रसिद्ध सुगन्धी तृणविशेषः । अत्रापि व-वयोः साम्यम् । तथा ‘नवकुल°’ इति अखण्ड पदम्, ‘न वकुल°’ इति च सखण्ड पदम् ।

५. पिशुनाः चाटुकारिणः ।

६ स्वामिनम्-नृपम् ।

७ तदमीभिः-तत्-तस्मात् कारणात्, अमीभि-सुजनै ।

1 °ता नयशो° डे । 2 °लिकेनेव दृ° डे ।

राज्यं वृद्धिमुपैति येन दधते येन प्रजास्ताः श्रियो
धर्मो येन न हीयते न विरमत्यन्ते च मुक्तिस्पृहा ।
कीर्तिर्येन दिगङ्गनाश्रियमलङ्कर्तुं समुज्जृम्भते
श्रद्धेयं तदवश्यमेव भवताऽनुष्ठेयमप्यादरात् ॥३४९॥

इत्यादिशिक्षां वितीर्य शुभनिमित्त-मुहूर्ते स्वयं समुत्थाय स्वमिव तमेव तत्रैव सिंहासने निवेश्य सकलसामन्तमन्त्रिसार्थवाहसहितो गृहीतसुवर्णकलशः सानन्दमभिषिच्य सतिलकं भालस्थलं चकार । नमिकुमारयशसेव धवलम् तद्विनयेनेव सन्निहितम् तद्भयेनेव प्रतिपन्नदण्डम् मुक्तावचूलतारकपरिकरित नभस्तलमिव तस्य मूर्ध्नि धारितमातपत्रं चञ्चच्चन्द्ररश्मिनिकरेणेव दिवापि सश्रीकता धारयतो नित्यमखण्डप्रवृत्तस्याभिनवस्य राज्ञः सेवागतेन रुचिरचामरयुगलेन [1]वीजनं चक्रे । दिशोऽपि प्रसन्ना . प्रतिशब्दनिभेन सुमुहूर्तानुमोदनामिव कारयितुं दध्वने दुन्दुभिना, निखिलकौशलिकसम्पादनपूर्वं प्रणेमे सकलेनापि राजचक्रेण ।

तदित्थं विनिवेश्यैनं राज्ये जातः स दीक्षितः ।
राज्ञामुत्तीर्णभाराणां किमन्यत् समयोचितम् ॥३५०॥
भूधरत्वं परित्यज्य रत्नत्रयधरोऽभवत् ।
मित्रीकृत्य वहिःशत्रून् दलयामास चान्तरान् ॥३५१॥
आत्मानं परमात्मानमिव ध्यायन्नहर्निशम् ।
स प्राप परमानन्दं केवलज्ञानभास्कर. ॥३५२॥
नमि. पुनरसौ राजा वशीकृतमहीतल ।
कुंत्रारौ न भयं चक्रे महानन्दमिवाद्विपि ॥३५३॥
सममधिगततत्त्वैर्धर्मचर्यां मुनीन्द्रै.
पुरजनपदचिन्तां मन्त्रिभिः सावधानः ।
विषयसुखसमृद्धिं ताभिरन्तःपुरीभि.
कलयति स तदानीं सिद्धधर्मार्थकाम. ॥३५४॥

कतिपयेषु च वत्सरेषु परमामस्खलितामुपभुञ्जानस्य राज्यसम्पदं कश्चिद् वैतालिकः समागतां शरदं वर्णयामास—

१ 'वीजण् वीजने' धातोः 'वीजनम्' इति रूपं साधु ।
'वीजण् वीजने' इति चौरादिकः अदन्तो धातुः 'क्रियारत्नसमुच्चये' (पृ० २८६) दृश्यते । भाषाया 'वींजवु'–चामर वींज्या ।

1 °कलित ख । 2 कस्यारेर्न भयं डे । 3 °भुञ्जमान° डे ।

कर्तुमीश ऋतुऋद्धीना कानन मधुरोचितम् ।
शरल्लक्ष्मीं विना पद्मकानन मधु-रोचितम् ॥३५५॥

धवलिता नु किमेष्यति कौमुदी-
महसि वृद्धतया पलिता नु किम् ।
अमृतदानयशश्छुरिता नु किं
शुशुभिरे नभसीह घनाघनाः ॥३५६॥

कलुषतामसुचन्निजवृष्टिभि-
र्भुवनतापमपास्य पयोमुचः ।
विशदता जडसङ्गविवर्जनाद्
यदि बभूव किमत्र कुतूहलम् ? ॥३५७॥

विषमपर्णसुमैरधिवासिते
भृशमगस्त्युदयाद्विमले जले ।
स्वमदगन्धिनि च प्रतिविम्बित
स्वमितमन्यम(द)मन्यत हास्तिकम् ॥३५८॥

१. ईश ! मधुरोचित पद्मकानन विना शरल्लक्ष्मीम् ऋतुऋद्धीना मधुरोचित कानन कर्तुं 'कौमुदी एष्यति' इति अतोऽनन्तरम् आगते श्लोके स्थितेन वाक्येन सबन्धः । मधुर च तद् उचित च इति मधुरोचितम् इति काननस्य विशेषणम् । पद्मकाननस्य विशेषणे मधुना रोचित मधुरोचित इति तृतीयातत्पुरुषः । शरदि पद्मानि न जायन्ते इति 'पद्मकाननं विना' इति सूचितम् ।

२ शरदि एष्यति आगामिनि कौमुदीमहोत्सवे मेघाः श्वेता भवन्ति, अतः 'धवलिताः' इति 'पलिताः' इति मेघविशेषणम् ।

३ अमृत-जल तस्य दान तेन छुरिताः-चकचकिताः घनाघनाः-मेघाः ।

४ मेघा हि शरत्समये जलसगविवर्जनाद् जलरहितत्वेन विशदाः-अकलुषाः जायन्ते, अत उक्तम्-जडसगविवर्जनाद् अन्योऽपि कश्चिद् जडसगविवर्जनाद् विशदो जायत एव । अत्र ड-लयोरैक्य बोध्यम् ।

५. हस्तिमदसमानगन्धा हि सप्तपर्ण-विषमपर्णनामका वृक्षाः इति प्रसिद्धिः, तेषा विषमपर्णाना सुमैः-कुसुमैः, भृश-भूरि अधिवासिते सुगन्धिते तथा अगस्तिनक्षत्रस्य उदयेन विमले जाते जले ते विषमपर्णवृक्षाः प्रतिविम्बिताः, अतः तत्रस्थ हास्तिक तेषा प्रतिविम्बित स्वमित स्वप्रमाणम् अन्यद् हास्तिक तत्र आगतम् इति अमन्यत इति अस्य पद्यस्य आशय । हस्तिना समूहः हास्तिकम् ।

वितरणं[1] पयसोऽपि समुज्झितं
समधिकं स्तनितं तु पुरस्कृतम् ।
इह घनैः कलिकाल इवेश्वरैः
परममी प्रतिभान्ति जडाशयाः ॥३५९॥

क्रमपरः[2] पतितो निजमार्गतो
न कतमः किल कर्दमतोयतः[1] ।
इह तदीयमपि प्रविदीर्यते
हृदयमब्दपितुर्विरहादिव ॥३६०॥

सततमेव[3] विधाय महामुदं
शरदृतौ गमनाय समुद्यते ।
गुणगणानिव तस्य जनः कणान्
स्वमनसीव दधाति निजे गृहे ॥३६१॥

१. कलिकाले ईश्वरैः इव घनैः । कलिकाले ईश्वराः पयसः क्षीरस्य वितरणं–दानं न कुर्वन्ति । शरदि च घनाः पयसः–जलस्य दानं न कुर्वन्ति । ईश्वराः घनाश्च द्वावपि जडाशयौ, ईश्वराः लोभाविष्टा अत एव जडाशयाः–मूढाशयाः, घनाः जडाशयाः–जलाशयाः–जलभृतः ।

ईश्वरा दानं न कुर्वन्ति, घनाश्च जलदानं कुर्वन्ति, तथापि तयोर्द्वयोरपि स्तनितं–गर्जनं तु पुरस्कृतमेव, ईश्वरा वयं दानिनः इति येन केन प्रकारेण गर्जनं कृत्वा प्रख्यापयन्ति, घनाश्च मेघाः स्वयमेव गर्जन्ति ।

२ क्रमपरः–गतिपरः कतमो जनः कर्दमतोयतः चिक्कणस्य कर्दमस्य पानीयतः निजमार्गतो न पतितः[1] सर्व एव पिच्छलात् कर्दमात् पतित एव, अथवा कर्दमतः–कर्दमवशात् कतमो जनो न पतितः[2] यत एवंविधजनपातेन–अब्दपितुः–अब्दो मेघः तद्रूपः पिता, तस्य अब्दपितुः विरहात्–मेघरूपजनकविरहात्–कर्दमस्य प्रचण्डमार्तण्डतापेन हृदयं विदीर्यते । कर्दमो हि अब्दपुत्रः–अब्दस्थितौ एव कर्दमो जायते । अधुना अब्दो नास्ति अतः सूर्यतापेन शोषणात् कर्दमस्य हृदयं विदीर्यत एव इति प्रसिद्धम् । पूर्वं मेघवर्षणेन भूरिः कर्दमो जातः, तेन च चिक्कणकर्दमतोयस्य संभावना कृता । अधुना तु मेघरूपजनकविरहात् सूर्यस्य प्रचण्डतापेन कर्दमस्य शोषणेन मध्ये भेदनेन च एवंविधजनपातेन इव कर्दमहृदयं विदीर्यते इति कल्पना ।

३. पूर्वं मेघवर्षणेन तदनन्तरं च शरत्समये समागते भूरि भूरि धान्यपाकः संजातः, ततः सततमेव महामुदं विधाय शरत्समये गमनाय समुद्यते–शरत्समयसमाप्तौ लोकः स्वमनसि गुणगणान् इव धान्यकणान् निजे गृहे दधाति–धारयति ।

1 प्रतिदी° डे । 2 निजगृहे ख ।

क्षयमनीयत पङ्ककथापि यत्
यदखिलोत्कलिकापि निराकृता ।
विकटकोपशमोऽपि यदादृतो
बभुरत सरितश्चरणोचिताः ॥३६२॥

मांसलोलुपरुचि मधूद्धृता
बिभ्रताऽपि शरदर्तुनाऽमुना ।
पापिनेव परमार्थवेदिना
मार्ग एव सुतरा पुरस्कृतः ॥३६३॥

तदेतत् पठ्यमानमाकर्णयत. कर्णविवरमविशद् अवनिपतेर्महान् कलकल' । 'किमेतत्' इति यावत् कमपि समादिशति तावदागत्य स्वयमेव विज्ञप्त हस्तिसाधनिकेन—

स्मृत्वा विन्ध्याचलक्रीडा मदान्धो गन्धसिन्धुर ।
बलादालानमुन्मूल्य हत्वा हस्तिपकानपि ॥३६४॥

सूर्याचन्द्रमसौ समौ समरुची कृत्वा निवेश्याग्रत—
श्चूडायामुदयक्ष्माधर इवास्थाद् यस्तव प्रीतये ।

१ अधुना शरत्समयसमाप्तौ पङ्कस्य कथा अपि क्षय प्राप्ता—न क्वापि कर्दमस्य नामापि श्रूयते—कर्दमाभावो जातः । अखिला उत्कलिका जलतरङ्गावली अपि निराकृता—अस्मिन् समये विरलजलत्वेन जलस्य उत्कलिका क्वापि न दृश्यते, अत एव विकटस्य विशालस्य कस्य जलस्य उपशम आदृतः, तथा विकटस्य कोपस्य पित्तप्रकोपस्य उपशम आदृतः । निर्मलजलस्य अल्पतया सरितश्च चरणोचिताः पादप्रमाणा बभुः—शोभिता जाता. । अथवा सरितः अल्पजलत्वेन चलन-योग्या इति । अत्र र-लयोः ऐक्य ज्ञेयम् ।

२ मासल+उलुप+रुचिम् । उलुपा —वीरुध —गुल्मिन्यो लताः । कोशेषु सर्वत्र लतावाची 'उलप'शब्द एव परन्तु अत्र ग्रन्थकर्त्रा 'उलुप'शब्द व्यवहृत । एक 'उलुपिन्'शब्द. विशिष्टस्य मत्स्य सूचयति परन्तु नात्र स सगच्छते, तथा नौवाचकोऽपि 'उलुप'शब्दो विद्यते सोऽपि नात्र घटते । शरत्समये उलपा.—लताः मासला भवन्ति इति हेतोः, अत्र 'उलप'शब्दो गृहीतः । मासलानाम् उलपाना रुचि—कान्ति, बिभ्रता—दधता ।

तथा मधुना—पुष्पमधुना उद्धृता ता रुचि बिभ्रता शरदर्तुना इति अन्वय । शरदा+ऋतुना—शरदर्तुना । पापिनेव पापिपक्षे मांसे लोलुपा या रुचि., ता बिभ्रता, तथा मधुना मद्येन उद्धृता रुचिं बिभ्रता पापिना । मार्ग एव शरत्पक्षे मार्गः—मार्गशीर्षमास' एव पुरस्कृत. । पापिपक्षे मार्गः—मृगः, मृग एव मार्गः हरिणः एव पुरस्कृत । परमार्थवेदिना अत्र 'अर्थ'शब्द निवृत्ति सूचयति 'शरत्समयो निवृत्त इति ज्ञेयम् । पापपक्षे 'अर्थ'शब्द प्रयोजन सूचयति । "अर्थो हेतौ प्रयोजने निवृत्तौ" इत्यादि हम—अनेकार्थ ।

३. चूडायाम्—हस्तिचूडायाम् सूर्याचन्द्रमसौ चित्रितौ इति आशय ।

सिन्दूरारुणकुम्भयुग्मसुभग पादप्रपातार्दिता
मूर्च्छार्तामिव मेदिनीं मदजलै सिञ्चन्नसौ गच्छति ॥युग्मम्॥३६५॥

राज्ञा पुनरनेकाश्ववारवृन्दैरनेकहस्तिपकैश्च सहसा एव तं वारणराजं व्यावर्तयितुमादिश्यत। केवलं पश्यतामेव तेषां जगाम लोचनानामगोचरं तथापि निजजनपदसीमानं यावत् तत्पदानुसारेण गत्वा दुष्प्रवेशतया परमण्डलस्य व्यावृत्य समागता मिथिलामेव, विज्ञप्तं च राज्ञ ।

कालान्तरेण सुदर्शनपुरागतै कैश्चिद्विज्ञप्तो मिथिलेश्वर । तद्यथा—

यस्तवावनिपुरन्दरद्विप कुन्दसुन्दरतनुर्यशःप्रभ. ।
सोऽस्ति चन्द्रयशस पुरेऽधुना दानवेशितुरिवाभ्रमुप्रिय. ॥३६६॥

यत , स तेन स्वविषये प्रविष्टो निजपुरुषेभ्यो विज्ञाय गृहीत्वाऽऽनीयत निजपुरम् ।

ततो नमिनरेन्द्रेण चतुरमतिर्महाधैर्यधनो विसर्जितस्तस्य मार्गणाय दूतः, गतस्तत्र पुरे, प्रतीहारविज्ञापितागमनश्च समागत्य प्रणम्य च चन्द्रयशस समुपाविशद् यथोचितप्रदेशे। तदनन्तरं च तदनुरूपं नरेन्द्रस्तवमवोचत् ।

कच्चिदप्रतिहतोदयस्तव क्ष्माधनः स मिथिलापुरीपति ।
तस्य पञ्चरथराजरक्षिताः कच्चिदक्षतमहोदया प्रजा ॥३६७॥

ज्ञापयाऽऽगमनहेतुमात्मनो येन भद्र ! नमिना स्मृता वयम् ।
हानि-वृद्धिसमयेषु सज्जनै. स्मर्यते य इह सैव सज्जन ॥३६८॥

विग्रहस्तव विभोरुपस्थित. केनचिद् बलवता द्विषा नु किम् ? ।
प्रास्तवीत् स दुहितु सुतस्य वा किं विवाहमहमुच्यता तत ॥३६९॥

अथ नरनाथप्रीतिवचनमाकर्ण्य निजस्वामिन परसाहाय्यापेक्षालक्षण लाघवमाशङ्कमानो दूतो वक्तुमारभत—'देव ! तस्य मिथिलाधिपते तस्य दिनाधिपतेश्च भुवनप्रतीतत्वेनाप्रतिहतोदयत्वम् । किमुच्यते—

नमेरेवोदयो यद्वा रवेरेव विराजते ।
अन्येषामुदयस्तेषां येषामेतौ प्रसीदतः ॥३७०॥

१ पुरन्दरद्विप.–पुरन्दर.–इन्द्र , द्विप –हस्ती ।
२ अभ्रमुप्रिय –ऐरावण ।

1 °प्रतापार्दिता डे विना। 2 °श्यत। तेषां ज° ल। 3 °रद्विप कुन्दरद्विपः कुन्दसुन्दर° ल। 4 °गमश्च डे। 5 मिथिलपुरी° ख। 6 °दक्षितम° ख। 7 °प्रतीतेन डे।

वहुविध-वो-ध.-कृतं सकलविपयचिन्तो-ऽवनैकधीर्यस्य ।
सचिवोऽरिवधूगण इव कृशो-दरीहृदयमधिवसति ॥३७१॥
राज्ये पद्मरथस्यापि समृद्धा मिथिला परम् ।
राज्ये श्रीमन्नमेरेपा स्वर्गलक्ष्मीं जिगीपति[2] ॥३७२॥

तथाहि—

सौराज्यातिशयोदितोदितधनप्राग्भारसुस्थप्रजा-
रत्न-स्वर्णविचित्रभूषणगणध्वंस्तान्धकारोदये ।
सूर्याचन्द्रमसावहर्निशमधो यस्या दधाते करान्[3]
भूपालब्धुमिव प्रतापमसम सौभाग्यमेणीदृशः ॥३७३॥
सदामोदे[4] लक्ष्मीकुलगृह इवाम्भोजसरणौ
दधत्या राज्ञोऽपि प्रमदमसम कोमलकरैः ।
स्फुटा चैत्ये धूमावलिरगुरुकर्पूरदहनो-
त्थिता यत्रोड्डीना स्फुरति मधुपालीव गगने ॥३७४॥

किञ्च,

१. अत्र श्लोके सचिव' उपमेयम्, अरिवधूगणश्च उपमानम् । तयोः विशेपणानि एवम्—वहुविधवोध' कृतः, सकलविपयचिन्त', अवनेकधीः एतादृश सचिवः कृशोदरीहृदयम् अधिवसति । अरिवधूगणः कीदृश ? अरिवधूगण वहुविधव, अधःकृतः, सकलविपयचिन्त', वनैकधी । सचिवः वहुविधवोधयुक्तः-विविधज्ञानयुक्त', अरिवधूगण वहुविधव' अरिगणस्त्रीपु नैका' स्त्रियः विधवाः—गतभर्तृका सन्ति । अतः स वहव विधवा' यस्मिन् स वहुविधवः । अत्र व-वयोरैक्य ज्ञेयम् । सचिव' कृतः—कृतकृत्य'—परिपूर्णकार्यकृत् । अरिवधूगण अध कृत' तिरस्कार नीतः ।

सचिव सकलविपयचिन्तः—समग्रदेशचिन्ताकारी । अरिवधूगणः सकला ये विपया शब्द—रूप-रस-गन्ध-स्पर्शाख्यास्तेपाम् अलाभात् तत्सवन्धे चिन्ताविधायकः । सचिवः अवनैकधीः—अवनम्—पालनम, प्रजापालनैकमति । अरिवधूगणः वनैकधीः-वने एव एका धीर्यस्य, तासा वनवासित्वात् । सचिव' कृशोदरीहृदयम् अधिवसति—कृशोदरीणा—श्यामाना हृदयम् अधिवसति । सचिवस्य स्वस्त्रीवल्लभत्वात । अरिवधूगण—यथासमय भोजनादिसामग्रीणाम् अलाभात् कृशः विशेपतो दुर्वलत्वेन क्षीण दरीहृदय—गुहाहृदयम्—गुहामध्ये अधिवसति । सचिवपक्षे 'कृशोदरी°' इति अखण्डम् । अरिवधूगणपक्षे 'कृश दरी°' इत्येव भिन्नपदत्वम् ।

२ जिगीपति—जेतुम् इच्छति ।

३. किरणान् ।

४ 'लक्ष्मीकुलगृहे' इत्यस्य सदामोदे विशेपणम् । सदा आमोदः हर्प' परिमलो वा यस्मिन् तादृशि लक्ष्मीकुलगृहे । राज्ञोऽपि कोमलकरैः असम प्रमद दधत्या मिथिलापुर्या सदामोदे

1 कृत. सकल° डे । 2 °ला पुरी ला । 3 °ध्वस्तेऽन्व° ख ।

विप्रा यत्र पवित्रसूत्रकलिता विस्तारितर्कक्रमा
मीमांसोद्यतमानसा. कुशलताङ्गीकारसारक्रियाः ।
स्वीकुर्वन्ति धनंजय प्रकटितश्रद्धानयज्ञोदया
नापि क्वापि च वेद-ना-द-र-हिता राज्ञः पुनर्मन्त्रिण. ॥३७५॥

स्फुरत्यसौ-भाग्यभरेऽपि योऽद्भुते
पुष्णाति नारीषु मनोरथक्रमम् ।
अनङ्गवत् किन्तु सदङ्गसङ्गतः
स यत्र राजन्यगणः पदे पदे ॥३७६॥

लक्ष्मीकुलगृहे इव चैत्ये अगरुकर्पूरदहनोत्थिता धूमावलिः अम्भोजसरणौ उड्डीना मधुपाली इव स्फुरति इति अन्वयः ।

अत्र 'राज्ञोऽपि' पदेन 'चन्द्रस्य अपि' इत्यपि भावो बोध्यः । राजपक्षे कोमलकराः अल्पपीडाकारका राजदेयभागाः, चन्द्रपक्षे कराः किरणाः । लक्ष्मीकुलगृहं हि कमलं तच्च सदा आमोदेन युक्तं भवति, धूम-भ्रमरयोः वर्णसादृश्येन धूमः 'मधुपाली'पदेन उपमितः । मधुपाः भ्रमराः, तेषाम् आली मधुपाली । भ्रमरा हि अम्भोजसरणौ कमलश्रेण्यां स्फुरन्ति एव । प्रमदो हर्षः । असमः असाधारणः ।

१. यत्र वसन्तो विप्राः पवित्रसूत्रकलिताः–पवित्रयज्ञोपवीतयुक्ताः, अथवा पवित्राणि श्रौतसूत्र–गृह्यसूत्रादीनि सूत्राणि वा ब्रह्मसूत्रादीनि सूत्राणि तैः कलिताः–तत्सूत्रज्ञानधारकाः । विस्तारितर्कक्रमाः–तर्कविद्याविशारदाः । मीमांसोद्यतमानसाः–मीमांसाशास्त्रविचारणायाम् उद्यतमानसाः । कुशलता°–कुशस्य–दर्भस्य या लता तस्याः अङ्गीकारेण सारक्रियाणां कर्तारः, अथवा कुशलतायाः–कौशलस्य अङ्गीकारेण सारक्रियाकारिणः–कर्मकाण्डकुशलाः, धनञ्जय-हुतवह–वैश्वानरम्–अग्निम् । अथवा धन जयम् इति पदविभागे धन–द्रव्यम्, जय–विजयं स्वीकुर्वन्ति, इत्यपि भावः ।

२. प्रकटित°–प्रकटितश्रद्धानपूर्वकं यज्ञविधायिनः क्वापि स्थाने ते विप्राः, वेदनादरहिता न–वेदस्य नादेन युक्ता एव–सततं वेदपाठिनः । पुनः राज्ञः मन्त्रिणः वेदनायाः–पीडायाः, दरः–भयम्, तस्मै हिता न–वेदना-दर-हिता अर्थात् वेदनाभयरहिता एव इति भावः । अथवा वेदना–पीडा, दरः–भयम्–वेदना-दरौ हितौ–धृतौ वेदना-दरौ यैः ते वेदनादरहिताः तादृशा न, अर्थात् येषां राज्ञः मन्त्रिणश्च सकाशात् न वेदना, नापि भयम् इति, इत्यपि आशयः सुगमः । 'वेद+नाद+रहिताः', तथा वेदना+दर+हिताः इति उभयथा विभागः ।

३. यो नृपः भाग्यभरेऽपि असौ करवाले अद्भुते स्फुरति सति नारीषु मनोरथक्रमं पुष्णाति, अर्थात् सङ्ग्रामशूरोऽपि नारीषु मनोरथपोषकः । तथा असौ करवाले स्फुरति न+अरीषु–नारीषु मनोरथक्रमं पुष्णाति–अरीणां इः–कामना, अरी.–अरिकामः–अरिकामना तेषु मनोरथक्रमं न पुष्णाति–अरिकामनाक्रमं न पुष्णाति । स्फुरति असौ करवाले एतत्–प्रवृत्तिद्वयम् अद्भुतम् इत्येव असेः अद्भुतता ।

४. तथा यत्र– अस्मिन् नृपे राज्यं शासति, राजन्यगणः अनङ्गवत् रूपेण अनङ्ग इव स्फुरति–विकासं प्राप्नोति तथापि स राजन्यगणः, सदङ्गसङ्गतः–सताम् अङ्गम् सदङ्गम्–सज्जनदेहः

[1]बहुधा-न्यायस्थधियः प्रकटितदूष्यादिदूषणादिविदः[1] ।
व्यवहार-निश्चयपरा वणिजः प्रामाणिका यत्र ॥३७७॥
[2]आदिवर्णानुग यस्याऽमन्त्यवर्ण रमाश्रितम् ।
द्विधा ध्यायन् समस्तोऽपि प्रायो लोकः प्रमोदते ॥३७८॥

ततो विचारयतु महाराज', सोऽपि मिथिलाधिपतिः कदाचिदिह हानिगोचरचारी भवति यन्निवर्तननिमित्तमप[र]साहाय्यमपेक्षते[2], वृद्धौ पुनरस्य कमलखण्डस्येव सदामोदर-सिकान्त'करणा मधुकरा इव कति न भूपतयः सन्निधिवर्तिन. । आगमनप्रयोजन पुनर्—य [3]एप शेपधवलकायो हस्तिमल्लस्तत्र पत्तने साम्प्रत वर्तते, स पुरन्दरस्येवाभ्रमुवल्लभो नमिनरेन्द्रस्यैव । स च किरीट इव मस्तकस्य तस्यैव राज्ञो विराजते नान्यस्य ।

तस्य संगत. सज्जनसमागमयुक्तः स राजन्यगण. स्फुरति । अत्रापि य अनङ्गवन् स कथ सदङ्ग-सगतः स्फुरति ? इति विरोध' । अर्थतश्च परिहारो दर्शित एव । अत्र स्फुरति इति सप्तम्यन्तं तथा क्रियापदम् अपि इति उभयथा व्याख्येयम् ।

अत्र 'असौभाग्यभरे' इति 'सौभाग्यभरे' इति च शब्दापेक्षया तथा अर्थापेक्षयाऽपि विरोधः । शब्दापेक्षया विरोध स्पष्ट एव । अर्थापेक्षया तु—असौभाग्यभरेऽपि अय नृपः कथं नारीषु मनोरथक्रम पुष्णाति । परिहारस्तु 'असौ भाग्यभरे' इति विभागे स्पष्ट एव ।

१ यत्र मिथिलानगर्यां ये वणिज' ते प्रामाणिकाः तथा बहुधा—बहुप्रकारेण न्यायस्थधियः न्याययुक्ताः, अथवा बहुधान्यानाम् अनेकप्रकाराणा धान्यानाम् आये स्था स्थिरा धी येषा ते—बहुप्रकारधान्यप्राप्तौ स्थिरबुद्धयः । अत्र 'बहुधा+न्याय' इति तथा 'बहु+धान्य+आय' इति च पदविभागो द्विधा । तथा दूष्यादिकाना—वस्त्ररूपपण्यवस्तुसमूहाना दूषणादिकं—दूषणगुणादिकं विदन्ति ।

अथवा यद् अस्ति दूष्यं—गर्ह्य—निन्दनीय तस्य दूषण विदन्ति—जानन्ति । आदिशब्देन यद् अस्ति अदूष्यम्—अगर्ह्य तस्य गुणमपि विदन्ति, अत एव ते वणिजः व्यवहारपरायणाः, तथा धर्मदृष्ट्या निश्चयपरायणाः । जैनपरिभाषाया 'निश्चय'शब्दः आध्यात्मिकप्रवृत्तिं द्योतयति । तथा ते वणिज' व्यवहारस्य—स्वव्यवसायस्य निश्चये परायणा, न तेषा व्यवहार' अनिश्चित इति ।

२ यत्र समस्तोऽपि लोक 'अर्हम्' इति पद ध्यायन् प्रायः प्रमोदते इति श्लोकस्य भाव' । 'अर्हम्' पदे आदौ अकारः तत तद् आदिवर्णानुगम् अस्ति, तथा अन्ते 'र्हम्' वर्णः, स च 'र'कारयुक्त', एवम् अनेन पद्येन 'अर्हम्' इति पद सूचित प्रतिभाति ।

अस्य श्लोकस्य अन्वयः इत्थम्—यत् पदम् आदिवर्णानुगम्—अकारानुगम्, 'र्हम्' इति अन्त्यवर्णश्च यत्र रकार आश्रित तादृगम् अर्हम् इति पद ध्यायन् इत्येवम् अनेन पद्येन 'अर्हम्' पदं सूचितम् । द्विधा—शब्दस्य जापेन, अर्थस्य च चिन्तनेन इति 'द्विधा'पदस्य भावः प्रतिभासते । अत्र रम्+आश्रित, तथा रमा+आश्रितम् इति पदद्वयम् । तथा च 'रमाश्रितम्' इत्यनेन लक्ष्मीआश्रयभूतम् इत्यपि भावः । अत्र 'रमाश्रितम्' इति पद पुनरपि आवर्तनीयम् ।

1 °विधः ख । 2 °मपेक्ष्यते ङे । 3 एव शे° ङे ।

तस्य मार्गणाय प्रहितोऽस्मि देवेन । अतः परं यदुचित तत् स्वयमेव महाराजः करोतु । राजा तु तदुद्धतोर्जितगर्जितमाकर्ण्य स्मित्वा तमुद्दिश्य सचिवमुवाच–'मतिधन ! दृष्टाऽस्य वाचालता, यदि वा वीक्षितो मिथिलावासिनो जनस्याहङ्कारः । किलास्माभिरभीष्टतमस्य नमिनरेन्द्रस्य प्रधानपुरुषोऽयमिति समुचितमभिरुचितं च समस्ताभ्युदयान्वितमागमनप्रयोजनमनुकूलमेवानुयुक्तमस्य पुनरखिलमपि निजहृदयविपरीतभावेन केनापि प्रतिकूलमेव परिणतम् ।' सचिवेनोदितम्–'देव । सत्यमेवेद परमहमेवं सम्भावयामि । नूनमस्य नरेन्द्रोऽप्यहङ्कारसागर एवात एवासावपि तन्मान्यस्तत्स्वभावः। प्रायेणानुजीविनः स्वामिनोऽभिप्रायानुरूपा भवन्तीति । वरं मदिरान्धवुद्धिरेव न पुनरितरः, स हि वराको विकलो नैकान्तेन दुर्विनीत एव स्यात् किन्तु विनीतोऽपि[1] क्वापि क्वापि दृश्यते । लक्ष्मीमदान्धबुद्धिः[2] पुनरात्माकूतेनाविकलोऽप्येकान्तेन[3] दुर्विनीततामेव पुरस्करोति । तथा हि—

> सर्वज्ञक्रमपङ्कजभ्रमरिकाभक्तिर्यदीयानघा
> सच्चारित्रपवित्रसाधुवचनैः सम्पूर्णकर्णश्च यः ।
> सिद्धान्तैकसुधानिधानरसिक. श्रद्धाविशुद्धैकधी–
> रैश्वर्यादिमदावलेपवशतो निन्द्यो दशास्योऽप्यभूत् ॥३७९॥

अपि च,

> विदलितमदावद्या विद्या सदैव निगद्यते
> मदयति यदा सापि क्षिप्र किलाक्रमिक जनम् ।
> वदति मदिरासोदर्यो या जनः कमलालया
> मदयतु कथ नेन सैपाऽस्खलत्प्रसरा तदा ॥३८०॥'

तदनन्तर पुनरुक्त महीपतिना–'भो ! राजकार्यैकस्यूत[4] ! दूत ! समाकर्णय निर्णयम्–

> न्यासीकृतस्तेन न वारणोऽसावानीयतास्मान्न च मार्गयित्वा ।
> अस्माभिरादायि पतिंवरावद् युक्त्या कथा दूत ! समर्प्यतेऽस्य ॥३८१॥'

ततः समस्तमपि सरहस्य नरेन्द्रवचनमवगम्य स दूतो जगाद–'महाराज ! नाप्रसादो विधेय· प्रतिवादिनेव वादिनो वचन प्रति, मयापि[5] भवतामुपन्यास प्रति प्रत्युपन्यासोऽवश्य विधेयः । कथं नाम प्रस्तावापतितं मन्दमतिरपि नोत्तरयति । नमिनरेन्द्र. स्वकीयवारणेन्द्रमार्गणरूपामनीतिं प्रस्तुवानो न कथमक्रमिक·[6] क्रमिकः पुनरसावेव यः सकलविपुलातले

---

1 °पि कोऽपि ग्ल । 2 लक्ष्मीमदिरान्ध° डे । 3 °कान्तदु° ख । 4 राज्यकार्यैः स्यू° डे । 5 मया भ° डे । 6 °मिक· पु° डे विना ।

ज्ञाततत्त्वैर्मुनिभिरपि पररमणीरमणलालसमानसानां विपाकवर्णनावसरे रावण इव प्रसभमित्थमुदाह्रियते तद् यथा —

कामग्रहग्रहिलता प्रतिपद्य सद्यः
सोदर्यमार्यचरितं विनतं निहत्य ।
प्रीतो जगाम निजधाम विवृद्धकामो
दष्टश्च दुष्टभुजगेन कुकर्मणेव ॥३८२॥

तदनु च मृत एव—

संप्राप[2] पापभरपूरितचित्तवृत्तिः, पङ्कप्रभां नरकभूमिमहो ! चतुर्थीम् ।
भो ! भो ! स एष परदाररिरंसयापि दुःखास्पदं मणिरथः सुतरां बभूव ॥३८३॥

अपि च,

वह्निं शोषयति जलं धूमः पोषयति जनकमपि[1] तस्य ।
अथ च द्वावपि जातावेकस्मादिन्धनादेव ॥३८४॥

तस्माच्छीलं प्रति न कारणं क्रमाक्रमौ अमृतयोनेरपि रत्नाकरतः श्रूयते कालकूटोत्पादश्च । अपि च,

या प्रातिवेश्मिक[3]गृहे गृहतः स्वकीयात्
कार्यात् कुतोऽपि दयिता दुहिता स्नुषा वा ।
कस्याप्यगच्छदवनीश ! पतिवरा सा
युष्मन्मते तदतिचारुरसौ विचारः ? ॥३८५॥'

ततः सुतरामुच्चावचवचनेन प्रगल्भमानं तं दूतमवलोक्य बद्धः[2] खल्वयमवध्यतया धृष्टश्च तदसौ वचनमात्रेणापि किं न निराक्रियते इति मनसिकृत्य राज्ञा तेन मन्त्रिणाऽभ्यधीयत—

१. जनकमिति जलजनकस्य—जलपितुः—मेघस्य । मेघो हि धूमयोनिः इति, धूमो जलस्य जनकः । कोशेषु 'मेघ'स्य पर्यायनामसु 'धूमयोनि' शब्दः प्रसिद्धः । धूमो योनिः अस्य इति च तस्य व्युत्पत्तिः । एतया व्युत्पत्त्या धूमः जनकम् अपि जलजनकं—मेघं पोषयति इति स्पष्टम् ।

२. अत्र प्रतौ 'वष्टा' अथवा 'वष्ट.' इत्येव पठितुं शक्यम्, परन्तु अर्थविचारणया 'बद्धः' इति कल्पितम्, अथवा 'वण्ड' इत्यपि अथवा 'वण्ठ' इत्यपि च संभवेत् । 'वण्ड'शब्दः भाषायां प्रसिद्धम्, 'वाडो' इत्यर्थं सूचयति । 'वण्ठ'शब्दश्च भाषायां प्रसिद्धः 'वाढो' इत्यर्थः, तथा भृत्यं वामनमपि च सूचयति ।

1 °मुदाहरणमुदाह्रियते, तद्यथा डे । 2 संप्राप्य पा° खल । 3 'वेश्मक° ख ।

'रे वराक ! नूनमनया वाचाटतया [1]किराटपाटके तन्निकटे वा सुचिरमुषित्वा राजपुरुषो जातोऽसि [1]तेनैव तदनुरूपैरुदाहरणैः प्रगल्भसे ? । हस्तिनो हस्तसञ्ज्ञावसरे रासभहस्तसंज्ञायाः कौतस्कुती सम्भावना ? । ननु रे ! मुमूर्षो ! मूर्ख ! कथमेतदपि न स्मरसि—

रविभोज्या नभोलक्ष्मीः पतिभोज्या पतिव्रता ।
सुरेन्द्रभोज्या नाकश्रीर्वीरभोज्या वसुन्धरा ॥३८६॥

तदलं वाचालतया, केनापि हन्यसे दुर्मुखतया । गम्यतां निजस्वामिसन्निधौ । कथ्यतां तदग्रे यदभिरुचितं निजचित्तस्य' इति वदति मन्त्रिणि यावन्न कश्चिदर्धचन्द्रयति तावदपसरण-मुचितमिति भयतरलविलोचनः सत्वरमुत्थायाऽगच्छदतुच्छप्रयाणकैः स्वनगरम्,

उपेत्य नृपमन्दिरं तदनुवेत्रिणा ज्ञापितः ।
जगाम नृपसन्निधिं विनतवास्तदङ्घ्रिद्वयम् ॥३८७॥
निविश्य च यथोचिताऽऽसनि जगाद निःशङ्कधीः ।
विपक्षपरिभाषितं सकलमेव यद्वाधिकम् ॥३८८॥

राजा तु तेन दूतवचनेन—

महान्तं कोपमारूढः सञ्जातः समरोत्सुकः ।
शोभते हि क्षमायुक्तो यतिरेव न भूपतिः ॥३८९॥
कुपितं वीक्ष्य भूपालं दूतः पुनरवोचत ।
'देवाहमेव मन्त्रीह समाकर्णय निर्णयम् ॥३९०॥
अविरलमदजलमदकलनवजलधरपटलपिहितसधरधर[2] ! ।
खुरपुटसुघटितपटुपटहरटितवरतुरगगणकलित ! ॥३९१॥

१ किराट–किरातशब्दौ पर्यायौ म्लेच्छजातिवाचकौ च । पाटकश्च भाषाया 'पाडो' इतिरूपं भावं सूचयन्ति–'पाडो' इति च 'वाणियानो पाडो' इत्यादि । कोशे तु 'पाटक शब्दः ग्रामार्धं सूचयति "पाटकस्तु तदर्धे स्यात्" [ हैम० का० ४, श्लो० २८ ] ।

१. 'आसन्'शब्दस्य सप्तम्या एकवचनम् 'आसनि' इति ।

२ अविरलमदजला ये मदकला ते एव नवजलधराः हस्तिनः तेषां पटलेन पिहिता सधरधरा येन सः तस्य आमन्त्रणे एकवचनम् च सधरधर ! धरः पर्वतः, धरेण सहिता सधरा, सधरा चासौ धरा च सधरधरा । "धरः कूर्माधिपे गिरौ" इति हैमे अनेकार्थे ।

1 तेन त° डे । 2 मूर्षक क° ख । 3 °या मा केनापि डे । 4 °याऽतुच्छप्रयाणकै-स्तदनन्तरम् डे । 5 °रूपः स° खल ।

जितरविरथकथ ! सुललितपथघनरथ ! मथितसकलरिपुहृदय ! ।
विघटितविकटकरटतटगजघट ! वरतरसुमटनतचरण ! ॥३९२॥
कुरु देव ! चन्द्रयशस प्रति सप्रति सर्वथा विजययात्राम् ।
स्वेनैव हस्तिना सह नन्वानय हास्तिक तस्य ॥३९३॥'
इत्थ दूतवच. श्रुत्वा भूप वीक्ष्य रणोत्सुकम् ।
अन्योऽन्य मन्त्रयामासुराशु वीराः प्रमोदत. ॥३९४॥
दिनमद्यतन सुविभातमहो ! श्रुतिमेति यदद्य कथापि युध. ।
प्रभुकार्यकरे विहिते समरे सफल तु भविष्यति बाहुबलम् ॥३९५॥
अस्माकमानृण्यमुपस्थित तदा स्थानादितोऽगात् स यदेव वारण. ।
अस्त्वेष तस्मात् कुलदेवतापदे प्रसादपात्रत्वफलप्रदानत. ॥३९६॥
दूत एव रणरङ्गहेतवेऽस्माकमेष उपकारकस्तत· ।
भूपतिर्यदमुनैव साप्रत वीरवृत्तिषु कृत कृतोद्यम· ॥३९७॥
अन्यथा प्रभुरय स्मरैकधी कि न धीरललित. श्रुतस्त्वया ।
पुण्यसिद्धिपरिपूर्णवाञ्छितो मन्त्रिमस्तकनिवेशितोदय ॥३९८॥
तदधुना समर प्रति सत्वरा कुरुत हन्त ! समस्तमुपक्रमम् ।
भवति येन नरेश्वरशासन किल यथा क्षुधितस्य निमन्त्रणम् ॥३९९॥

अथ तेषा महावीराणा तादृशी रणरङ्गरसिकता करतलवर्तिनी प्रस्तुतप्रयोजनसिद्धि कलयन्—

निजसचिवमुवाच भूमिपाल. 'कलयसि चेतसि वीरवृत्तिमेषाम् ।
स्पृहयति ममापि शासन या समरविधि प्रति लम्पटा नितान्तम् ॥४००॥

तदमीषा चित्तोत्साह एव पवन-शकुनौ तत् कि न प्रदापयसि प्रयाणढक्काम् ? । किं न प्रगुणयसि विजययात्रार्थे सेनापतिम् ?' इति वदति राज्ञि प्रगुणयति च मन्त्रिणि समागतोऽनाहूत एव मौहूर्तिक । कथित चानेनानुयुक्तेन—'देव ! प्रदीयता प्रयाणक सकलसिद्धिहेतुरेष मुहूर्तो वर्तते ।' विज्ञप्त मन्त्रिणा—'देव ! समासन्ना भवतामभिमतार्थसिद्धि. । तेनैवानुकूलदैवेनेव विनैव यत्नमेष निखिलोऽपि वाञ्छितसमुदयः सन्निधीयते । तत. क्रियता मौहूर्तिकवाक्यम्' इति ।

१ करटः करिगण्डस्थलम् ।

1 °तरविरटवरसुभट नतचरण ! ल। 2 °तकवि° ख। 3 °वरसुभट° ख। 4 °रणोन्मुखम् ख। 5 °त यदा° ख। 6 स दैववा° ल। 7 °नी वीक्ष्य प्रस्तु° ड। 8 नवृत्ति क° ड।

प्रदापितप्रयाणढक्क. समुत्साहितवीरचक्र सम्पादितसकलमङ्गलाचारक्रम. पुरस्कृतनय-विक्रम. प्राप्तो विजययात्रायै पुरगोचरं नरेन्द्र ।

वारणा-ऽश्व-रथ-पत्तिभूषिता
दुर्द्धराश्वतर[1]-सैरिभोक्षका[2] ।
उष्ट्रयूथ-शकटैर्निरन्तरा
तत्क्षणाच्च मिलिता पताकिनी[3] ॥४०१॥

चलितस्ततो नरेन्द्र कदाचिदपि नैवमसौ दृष्टपूर्व. प्रतिष्ठमानो राजपाटिकायामिति सकौतुकैर्विज्ञाय यात्राऽविनाभूतचिह्ननिरीक्षणेन प्रस्तुतनिर्णयै किमहो ! सोऽपि कोपि समस्ति यस्योपरि देव स्वयमेवायमुपक्रमत इति सदिहानैरपहृतगजराजदिगनुमानप्रतिष्ठितैसुदर्शनपुर-प्रयाणकरहो ! चन्द्रयशसा नयनिपुणेनापि न शोभनमनुष्ठितमिति कृतशोचनैरसमानविग्रहार-म्भिणस्तस्य 'मणिरथक्रमिका एव सचिवा.' इति वाचालैर्नूनमसौ न सामान्य कथमन्यथा त प्रति यातीति विहितगमनप्रतिष्ठैरहो ! कीदृशो रणारम्भ इति निरीक्षितुकामैरनेकैर्वाणिज-कैरपि द्विजातिभिरपि नागरिकैरनुगम्यमान पुर· पुर· शकुनैराहूयमान इव पवनप्रेर्यमाणमिव यानपात्र प्राप्तो निजजनपदजलधितीरं नरेन्द्र· ।

देश-पुर-ग्रामाणा क्षेत्राणामथ चतुष्पदादीनाम् ।
य. कश्चिदुपद्रवमात्रमिह करिष्यति हि परराज्ये ॥४०२॥
नून स निग्रहपद विपक्ष इव लप्स्यते स्वपक्षोऽपि ।
य· समरगत· प्रहरति स एव खलु युज्यते हन्तुम् ॥४०३॥
इत्याज्ञातो राज्ञ प्रविशत्यपि शत्रुजनपदं सैन्ये ।
घासेन्धनं विनोपद्रवं च न चकार कश्चिदपि ॥४०४॥

---

१. अश्वतर भाषायाम् 'खच्चर' इति प्रसिद्धः । स गर्दभपितृकतया अश्वाया जातत्वात् नजाजह्रासः अश्वतरः इति हैम-विवरणम् अश्वतरशब्दे' ।

२. सैरिभ+उक्षका । सैरिभ —महिष । उक्षका·—बलीवर्दाः ।

३. पताकिनी—सेना ।

४. अविनाभूतानि नियततया सहचारीणि-यथा अग्नि विना धूमस्य न सम्भव, ततः धूम अग्निअविनाभावी तथैव यानि चिह्नानि यात्रा विना न भवन्ति, सत्या यात्रायामेव सम्भवन्ति तादृशानि चिह्नानि नियतसहचारीणि अविनाभूतानि ।

५. पुर पुरः शकुनै·—अग्रे अग्रे जायमानै शकुनै· ।

६. 'घास'शब्द यथा प्राकृत-संस्कृतभाषयो सुप्रसिद्धः तथा लोकभाषायामपि तादृश एव

---

1 °पूर्व प्र° डे । 2 °विजयया° डे । 3 °त कृतशोच° डे । 4 °गिसिकै° डे । 5 नागरकै° ख । 6 पुन. पुरः श° डे ।

यतःप्रभृति चक्रेऽसौ प्रयाण मिथिलेश्वरः ।
ततःप्रभृति सङ्ग्रामपरश्चन्द्रयशा अपि ॥४०५॥

कम्पयन्निव भूचक्र पातयन्निव पर्वतान् ।
शोषयन्निव पाथोधीन् सम्मुखीनश्चचाल स. ॥४०६॥

न केवलं बल तस्य न माति स्म महीतले ।
वीराणामिच्छता युद्ध प्रमोदस्त्रिजगत्यपि ॥४०७॥

निमित्त-शकुनादीना बाधकत्वात् पदे पदे ।
वलाद् व्यावृत्त्य नीतोऽसौ राजधान्या महत्तमैः ॥४०८॥

नून दुःशकुनावली नमिरिव प्रत्यर्थिनी वर्तते
नून मन्त्रिमहत्तमाः समरतस्त्रस्ता वराका अमी ।
तेनोस्माकमरेक्षत ध्रुवमृणाद् मोक्षो भवन्मृत्युतो
भूपालस्य पुनर्जयस्तदधुना कस्याग्रत. कथ्यते ? ॥४०९॥

इत्थ वीरा वदन्तोऽपि वलादपि निवर्तिता. ।
राज्ञामाज्ञाऽन्यथाकर्तुं म शक्या केनचिद् यत. ॥४१०॥

तथापि महीपतिना तथा तेषा मानः पुपुषे यथा सकलमपि विषादविषमुत्सृज्य जाताः प्राकारस्थरणरसिकाः प्रदत्तासु प्रतोलीपु, दृढीकृतेषु यन्त्रेषु, धानुष्कपूर्णासु विद्याधरीषु, राशीक्रियमाणेषु प्राकारोपरि पाषाणगोलकेषु । समागत्य नमिनरेन्द्रेण समन्तत. समरुध्यत नगरम्, विहिता प्रतियन्त्रादिसामग्री, प्रवृत्तमायोधनम् तथापि प्राकारस्थवीरधाराधरशरधारा-धोरणीनामनवच्छिन्नतया न कश्चिदासन्नो भवितु शशाक । केवल पवनस्येव मध्यस्थस्य विश्वस्यापि योगिनेव तेन सर्वथा रुरुधे बहिष्प्रचार । एव च कतिपयेषु वासरेषु प्रवर्तमाने विग्रहाग्रहे—

प्रसिद्धः । अमरकोशेऽपि 'घास' इति शब्दो निर्दिष्टः । अय शब्दः अतिप्राचीनोऽपि अविकृत एव अद्ययावत् समागत ।

१. अस्य स्पष्टार्थो नावगम्यते, तथापि 'एतेनास्माकमरक्षता ध्रुवमृणाद् मोक्षो भवेद् मृत्युत' इत्येव संशोधितः पाठः कमपि अर्थ गमयितु समर्थं इति शेष समग्र तु पद्य विद्वद्वरेण्या विचारयन्तु ।

1 °रक्ष्यत डे । 2 °क्षो मयो मृ° डे । 3 °दमुत्सृज्य ख । 4 प्राकारवीर डे ।

परमुपरि विधाय स्वामिकार्यं विधातुं
खनति सुभटवर्गो सर्वतः शालमूलम् ।
क्षिपति करसमूहं भानुवत् पौरवीरे
हतसुभटसमूहं तीव्रनाराचवृन्दम् ॥४११॥

तदानीं सा सुव्रता विमानैरिवानुत्तरैः[1] पञ्चभिरपि महाव्रतैः, ग्रैवेयकलक्ष्मीभिरिव निरस्त-विषमविशिखविषविकाराभिर्नवभिरपि ब्रह्मचर्यगुप्तिभिः[2], कल्पस्थितिभिरिवोत्तरोत्तराभिर्द्वादशभिरपि भावनाभिः[3], चन्द्रादिज्योतिष्कैरिव प्रकाशसुभगैः[4] पञ्चभिरपि सदाचारैः, भवनपतीन्द्रैरिव क्षमाधरैर्विंशत्या समाधिस्थानैः[5], व्यन्तरैरिव सदासन्निहितैरष्टभिरपि प्रवचनमातृभिः[6] सततमपि सेव्यमाना यथोचितविहारेण विहरमाणा तमङ्गजयोः समरसंरम्भं कर्णोपकर्णिकया समाकर्ण्य परस्परमत्सरपाशरुद्धगती नरकपञ्जरकोटरे वराकाविमौ सपक्षावपि[7] पक्षिणाविव मा स्म पतता-मिति सकरुणा प्रवर्तिनीमनुज्ञाप्य कतिपय-तपस्विनीभिः सह समागतैव नमिराजद्वारे,

१. विमानानि 'अनुत्तर'नाम्ना प्रतीतानि जैनपरिभाषायाम्, तानि च सर्वोत्तमानि, ऊर्ध्वलोके न तेभ्यः किमपि विमानम् उत्तरम् उत्तमं वा वर्तते । महाव्रतानि अपि अनुत्तराणि-सर्वोत्तमानि, नास्ति उत्तरम् उत्तमं येभ्यः तानि अनुत्तराणि सर्वोत्तमानि इति विमान-महाव्रतयोः साम्येन उपमान-उपमेयभावः ।

२. ग्रैवेयकेषु तत्तत्स्थानप्रभावेण विषमविशिखस्य कामस्य विषविकारो यथा न विद्यते तथैव नवसु ब्रह्मचर्यगुप्तिषु संयमप्रभावतः विषमविशिखस्य विषविकारो न विद्यते । एतत्स्थान-निवासिनो देवा विषयविकारत्यागपूर्वकं ब्रह्मचारिणो न सन्ति परन्तु तेषां ब्रह्मचर्यं तत्स्थानप्रभावतः ।

३. कल्पस्थितिः द्वादशधा उत्तरोत्तरा पौर्वापर्येण. एवं भावना अपि द्वादशैव उत्तरोत्तराः—उत्तमोत्तमाः, अथवा उत्तरोत्तरानुक्रमेण, एवम् अनयोः उत्तमतया संख्यापेक्षया च साम्यम् ।

४. ज्योतिष्कदेवाः सूर्यादयः पञ्चप्रकाराः प्रकाशसुभगाः—मनोहराः । एवं सदाचारा अपि पञ्चप्रकाराः प्रकाशसुभगाः—आत्मप्रकाशसुभगा इति ।

५. भवनपतीन्द्रा दश दश, एवम् उत्तर-दक्षिणदिगपेक्षया विंशतिः । समाधिस्थानानि अपि विंशतिः इत्येव अनयोः संख्यासाम्यम् । क्षमाधरा इति—समाधिस्थानानि, क्षमायाः—सहिष्णु-तायाः आधारस्थानानि ।

६. व्यन्तराः पिशाचादयः अष्टौ, प्रवचनमातृका अपि अष्टौ, यथा व्यन्तराः सदासन्निहिता तथा प्रवचनमातृका अपि सदासंनिहिताः । तासां सदा असंनिहितत्वे संयमाभावः, अतः संयम-युक्तानां व्यक्तीनां तासां संनिहितत्वं बोध्यम् ।

७ सपक्षौ अङ्गजौ—समानः पक्षः ययोः तौ सपक्षौ परस्परबन्धुरूपौ एकपितृकौ । पक्षिणौ सपक्षौ—पक्षिणौ पक्षेण सहितौ सपक्षौ—सपत्त्रौ—सपिच्छौ च ।

1 'मातृकाभिः ख विना । 2 'वपि मा स्म ख ।

